विष्णुर्भोज्याधिपः स्वाहायुक्तोऽष्टादशवर्णकः ।। 28 ।।

अङ्गानि तत्पदैरेव मन्त्रचिन्तामणिस्त्वयम् ।
यथेष्टभक्ष्यभोज्यादिदाता मुक्तिप्रदायकः ।। 29 ।।

ध्यायेत्सुशुक्लमरविन्ददलायताक्षं
सौवर्णपात्रदधिभोज्यमथामृतं च ।
दोर्भ्यां दधानमखिलैश्च सुरैः [1]समेतं
शीतांशुमण्डलगतं रमया समेतम् ।। 30 ।।

(अष्टाक्षरो वामनमन्त्रः)

[2]अमृतं स्वयमुद्देश[3]युक्तः सहृदयो मनुः ।
सतारोऽष्टाक्षरोऽङ्गानि पदैर्व्यस्तैः समस्तकैः ।। 31 ।।

उद्यद्रविप्रभमरीन्द्रदरौ गदां च
ज्ञानं च विभ्रतमजं प्रियया समेतम् ।
विश्वावकाशमभितः [4]प्रतिभासयन्तं
भासा स्वया स्मरत विष्णुमजादिवन्द्यम् ।। 32 ।।

(त्रिविक्रमगायत्रीमन्त्रः)

[5]त्रिविक्रमस्तु सोद्देशो विश्वरूपश्च तत्परः ।
धीविदौ च महे विष्णुस्तन्नःप्रेरणमध्यगः ।। 33 ।।

(परशुराम-दाशरथिरामषडक्षरमन्त्रः)

स्वयमुद्देशसंयुक्तस्तदाद्यर्णपुरःसरः ।
सनतिः षडक्षरो मन्त्रो वर्णैरङ्गक्रिया मता ।। 34 ।।

---

1. परीतं - क ।   2. अमृतः - ख ।
3. युतः - क ।   4. प्रतिपूरयन्तं - क ।
5. इयं गायत्री वामनगायत्रीत्यप्याक्रियते ।

अङ्गारवर्णमभितोऽण्डबहिः प्रभाभि-
व्याप्तं परश्वधधनुर्धरमेकवीरम् ।
ध्यायेदजेशपुरुहूतमुखैः स्तुवद्भि-
रावीतमात्मपदवीं प्रतिपादयन्तम् ।। 35 ।।

श्यामं रवीन्द्वमितदीधितिकान्तियुक्तं
ज्ञानं शरं च दधतं प्रियया समेतम् ।
स्वात्मस्वरूपममितं हनुमन्मुखेषु
सन्दर्शयन्तमजितं स्मरतोरुगीर्भिः ।। 36 ।।

(भार्गवमन्त्रद्वयं तथा राघवमन्त्रद्वयम्)

निजगोत्रन्तु सोद्देशं पूर्वाक्षरपुरःसरम् ।
नत्यन्तं तारपूर्वं च मनुरष्टाक्षरो मतः ।। 37 ।।

ते च बीजे बीजभूते धर्मादीनामशेषतः ।
एते विजयदा मन्त्रा ज्ञानमोक्षप्रदायकाः ।

हिरण्यरत्नराज्यादिसमभीष्टसुरद्रुमाः ।। 38 ।।

(अष्टादशाक्षरकृष्णमन्त्रः)

कृष्णो गोविन्च [1]कामेतः सोद्देशो वल्लवीजनः ।
प्रियश्च तादृशः स्वाहायुगष्टादशवर्णकः ।
पदैरङ्गानि सम्प्रीतिकाममोक्षप्रदो मनुः ।। 39 ।।

ध्यायेद्धरिन्मणिनिभं जगदेकवन्द्यं
सौन्दर्यसारमरिशङ्खवराभयानि ।
दोर्भिर्दधानमजितं सरसं च भैष्मी-
सत्यासमेतमखिलप्रदमिन्दिरेशम् ।। 40 ।।

---

1. कामेतौ – क ।

(षडक्षरैकाक्षरकृष्णमन्त्रौ)

सकामः स्वयमुद्देशी नत्यन्तोऽयं षडक्षरः ।
तदादिरपि सर्वेष्टचिन्ता[1]मणिरुदाहृतः ।। 41 ।।

दृष्टार्थ एव मन्त्राणां कलौ वीर्यं तिरस्कृतम् ।
तत्राप्युद्दीप्तवीर्या हि मन्त्रा अत्र प्रकीर्तिताः ।

वासिष्ठवृष्णिप्रवरमन्त्रास्तत्रापि वीर्यदाः ।। 42 ।।

(अष्टाक्षरः वेदव्यासमन्त्रः)

स्वयं वेदपदारूढः पूर्ववर्णपुरःसरः ।
नत्यन्तोऽष्टाक्षरो मन्त्रः प्रियो विज्ञानगोपतेः ।। 43 ।।

व्याख्याश्रीसर्वविज्ञानकवितादिगुणप्रदः ।
वादे विजयदो नित्यं यथा युद्धे नृकेसरी ।। 44 ।।

विज्ञानरोचिःपरिपूरितान्तर्बाह्याण्डकोशं हरितोपलाभम् ।
तर्काभयेतं विधिशर्वपूर्वगीर्वाणविज्ञानदमानतोऽस्मि ।। 45।

(व्यासगायत्रीमन्त्रः)

ज्ञानानन्दपुरः पूर्णो विद्महे धीमहे तथा ।
तन्नःप्रेरणमध्ये तु व्यासो मन्त्राधिपाधिपः ।। 46 ।।

(एकाक्षरः व्यासमन्त्रः)

आदिबीजं [2]स्थिराशेषज्ञानबीजं विमुक्तिदम् ।
सर्वपापक्षयकरं सर्वव्याधिविनाशनम् ।। 47 ।।

---

1. --- मणिरुदीरितः - क ।

2. स्थिरादोषज्ञानवीजं - क ।

ध्यायेच्छशाङ्कशतकोट्यतिसौख्यकान्तिं
संसिच्यमानममृतोरुघटैः सुरेशैः ।
वर्णाभिमानिभिरजेशमुखैः सहैव
पञ्चाशता प्रतिगिरन्तमशेषविद्याः ।। 48 ।।

(हयग्रीवमन्त्रः)

सोद्देशस्तु स्वयं दीर्घपूर्वार्णाद्यो नमोयुतः ।
सर्वविद्याप्रदोऽष्टार्णः प्रतिवादिजयप्रदः ।
विमुक्तिसाधनः कीर्तिबुद्धिस्थैर्यप्रदः सदा ।। 49 ।।

वन्दे तुरङ्गवदनं शशिबिम्बसंस्थं
चन्द्रावदातममृतात्मकरैः समन्तात् ।
अण्डान्तरं बहिरपि प्रतिभासयन्तं
शङ्खाक्षपुस्तकसुबोधयुताब्जबाहुम् ।। 50 ।।

नस्तो मुखादपि निरन्तरमुद्गिरन्तं
विद्या अशेषत उताब्जभवेशमुख्यैः ।
संसेव्यमानमतिभक्तिभरावनम्रै-
र्लक्ष्म्याऽमृतेन सततं परिषिच्यमानम् ।। 51 ।।

(कपिलदत्तात्रेयमन्त्रौ)

स्वयमुद्देशवान् पूर्ववर्णपूर्वो नमोयुतः ।
सतारोऽष्टाक्षरश्चैव नवार्णश्च मनू स्मृतौ ।। 52 ।।

प्रोद्यद्दिवाकरसमानतनुं सहस्र-
सूर्योरुदीधितिभिराप्तसमस्तलोकम् ।
ज्ञानाभयाङ्कितकरं कपिलं च दत्तं
ध्यायेदजादिसमितिं प्रतिबोधयन्तम् ।। 53 ।।

(चत्वारो वैदिकमन्त्राः)

सूक्तं दीर्घतमोदृष्टं विष्णोर्नुकमिति प्रभोः ।। 54 ।।

सर्वार्थदं गार्त्समदं यो जात इति चापरम् ।
वासिष्ठं च परो मात्रयेति ज्ञानविमुक्तिदम् ।। 55 ।।

भौवनीयं सर्वकाममोक्षदं य इमेत्यपि ।
एवमेवाखिला वेदा ज्ञातव्या विष्णुतत्पराः ।। 56 ।।

(वैदिको लक्ष्मीमन्त्रः)

स्वदृष्टं सूक्तमखिलं कामदं हरितुष्टिदम् ।
[1]वाचोऽम्भृण्याः श्रियोऽङ्गानि श्रीर्लक्ष्मीर्मेन्दिरा रमा ।। 57 ।।

कौशेयपीतवसनामरविन्दनेत्रां
पद्मद्वयाभयवरोद्यतपद्महस्ताम् ।
उद्यच्छतार्क[2]सदृशीं परमाङ्कसंस्थां
[3]ध्यायेद्विधीशनुतपादयुगां जनित्रीम् ।। 58 ।।

(लक्ष्म्या एकाक्षरं मन्त्रद्वयम्)

लज्ञा बीजं च तद्बीजं तस्या एवभिधायकम् ।
पाशांकुशौ रक्तवस्त्रे लज्ञाबीजे विशिष्यते ।। 59 ।।

अमध्ययुग्मस्वरगतेनैवाङ्गमुदाहृतम् ।

(लक्ष्म्या अपरं वीजमन्त्रद्वयम्)

सत्तावीजं च दुर्बीजं तद्वदेव प्रकीर्तितम् ।। 60 ।।

---

1. वाचोऽम्भ्रिण्याः - ख ।
2. ----सदृशां - क ।
3. ध्यायेद्विधीशनत - क ।

वर्णः श्यामो विशेषोऽत्र ताम्बूलं नीलमुत्पलम् ।
चक्रशङ्खौ तर्जनं च शूलमित्यपरत्र च ।। 61 ।।

(पञ्चाक्षरः भूमन्त्रः, षडक्षरः दुर्गामन्त्रः, वेदोक्तदुर्गामन्त्रश्च)

नमोऽन्तः स्वेन सहितस्तदेवान्यो मनुः स्मृतः ।
दुर्गा त्रिष्टुप् कश्यपोक्ता तत्र वर्णोऽग्निवत् स्मृतः ।। 62

त्रिनेत्रत्वं च दुर्गायाः प्रायः सर्वत्र कथ्यते ।
पादैः समस्तेन तथा [1]षड्वर्णेनाङ्गमुच्यते ।। 63 ।।

रमाया एव रूपाणि त्वेतानि हि विदो विदुः ।
मुख्यतो जामदग्न्यस्तु देवताऽस्य मनोः स्मृतः ।। 64 ।।

(वेदोक्तः चतुर्मुखमन्त्रः)

हिरण्यगर्भसूक्तं च भृगुदृष्टं प्रकीर्तितम् ।
ब्रह्मधातृविरिञ्चाजपाद्यैरङ्गमुदाहृतम् ।। 65 ।।

ध्यायेन्निषण्णमजमच्युतनाभिपद्मे
प्रोद्यद्दिवाकरसमूहनिकाशमग्र्यम् ।
भातृप्रकारकरमुत्तमकान्तिमद्भि-
र्वक्त्रैः सृजन्तमखिलैः [2]परमार्थविद्याः ।। 66 ।।

(चतुर्मुखस्य पञ्चाक्षराष्टाक्षरमन्त्रौ)

स्वयम्भुवे(?)शनतिमांस्तस्य पञ्चाक्षरो मनुः ।
स्वयमेवापरोऽष्टार्णस्तादृशः सम्प्रकीर्तितः ।। 67 ।।

---

1. षडर्णेन - क ।
2. परमार्थविद्याम् - ख ।

(वेदोक्तमुख्यप्राणमन्त्रः)

बळाद्यं भृगुणा दृष्टं प्राणाग्नेः सूक्तमुच्यते ।
प्राणाद्यैः पञ्चभिस्तस्याप्यङ्गान्युक्तानि सूरिभिः ।। 68 ।।

उद्यद्रविप्रकरसन्निभमच्युताङ्के
स्वासीनमस्य नुतिनित्यवचःप्रवृत्तिम् ।
ध्यायेद्गदाभयकरं सुकृताञ्जलिं तं
प्राणं यथेष्टतनुमुन्नतकर्मशक्तिम् ।। 69 ।।

(पञ्च मुख्यप्राणमन्त्राः)

प्राणाद्याः पञ्चमन्त्राश्च तस्य देवस्य वाचकाः ।
उच्यते हरिरप्येतैः साक्षान्नारायणादिकः ।। 70 ।।

(ब्रह्माणी - भारतीमन्त्रौ)

ब्रह्माण्या अपि भारत्या गौरीर्यस्त इति श्रुतौ ।
मन्त्रौ दीर्घतमोदृष्टौ सर्वाभीष्टप्रदायकौ ।। 71 ।।

उद्यद्दिवाकरसमूहनिभां स्वभर्तु -
रङ्के स्थितामभयसद्वरबाहुयुग्माम् ।
मुद्रां च तत्त्वदृशये वरपुस्तकं च
दोर्युग्मकेन दधतीं स्मरताऽत्मविद्याम् ।। 72 ।।

(ब्रह्माणीभारत्योर्मन्त्रान्तरम्)

पादैर्व्यस्तैः समस्तैश्च तदङ्गानि विदो विदुः ।
स्वयमुद्देशनत्यन्तौ मन्त्रौ द्वावपरौ तयोः ।। 73 ।।

मन्त्रा एते हरेः प्रीतिदायकाः सर्वकामदाः ।
[1]इष्टं दैवं हरिः साक्षाल्लक्ष्मीर्भाग्यस्य देवता ।

---

1. जुष्टं - क ।

गुरुर्ब्रह्माऽथ वायुर्विद्यादेव्यौ प्रकीर्तिते ।। 74 ।।
तस्मादेते प्रिया विष्णोरन्तरङ्गतया सदा ।
ज्ञेयाश्चैव प्रपूज्याश्च विष्णोः प्रीतिमभीप्सता ।। 75 ।।

(शिवपञ्चाक्षरमन्त्रः)

उद्देशनतियुङ्मन्त्रः स्वयमेव शिवस्य तु ।
वर्णैरेतैस्तदङ्गानि वामदेवो मुनिः स्मृतः ।
पङ्क्तिशब्दार्थविज्ञाने न हि छन्दसि संशयः ।। 76 ।।
ध्येयः पञ्चमुखो रुद्रः स्फटिकामलकान्तिमान् ।
विद्युच्छुभ्रासितरजःश्यामान्यस्य मुखानि तु ।
जटावबद्धेन्दुकलः प्रियायुङ् नागभूषणः ।। 77 ।।
मन्त्रेष्वेतेषु सर्वेषु वाच्यस्तारेण केशवः ।
अन्तर्यामितया ध्येयः सर्वदेवेषु सर्वदा ।। 78 ।।

(पञ्चाक्षरः पार्वतीमन्त्रः)

स एव वनितालिङ्गः पार्वत्या मनुरुच्यते ।
गौरी वराभयकरा ध्येया पीताम्बरा च सा ।। 79 ।।

(शेषमन्त्रः)

स्वयमुद्देशनत्यन्तः पूर्वपूर्वः षडक्षरः ।
सनत्कुमारदृष्टोऽयं [1]मन्त्रः शेषस्य कामदः ।
दधानो हलसौनन्दौ श्वेतवर्णः कृताञ्जलिः ।। 80 ।।
[2]सहस्रमूर्धा द्वितीयकर्णभूषः प्रियायुतः ।
वनमाली नीलवासा ध्येयो विष्णोस्तु पृष्ठतः ।। 81 ।।

---

1. मनुः - ख । 2. सहस्रमूर्धाऽद्वितीयकर्णभूषः - क ।

(गरुडमन्त्रः)

व्यत्यस्तपक्षितारौ च स्वाहान्तो गरुडो मनुः ।
काश्यपोऽस्य मुनिर्ध्येयः सुधापूर्णं हिरण्मयम् ।। 82 ।।

दधानः कुम्भमभयं पीतः [1]शुक्लोऽरुणो हरिः ।
कृष्णश्चाऽजानुतो नाभेः कण्ठात् कादन्त एव च ।। 83।।

प्रियायुक् पुरतो विष्णोः पक्षतुण्डसमन्वितः ।
जङ्गमस्थावरविषहृदयं सर्वकामदः ।। 84 ।।

(लोकपालमन्त्राः)

मन्त्राश्च लोकपालानां नमोऽन्ताः सर्वकामदाः ।
पीतरक्तासितश्वेतशुक्लरक्ताश्च वर्णतः ।। 85 ।।

सप्रियाः साभया वज्रशक्तिदण्डासिपाशिनः ।
गदाकुमुद[2]शूलर्ष्टि खड्गिनो भूषणोज्ज्वलाः ।। 86 ।।

(स्कन्दमन्त्रः)

अग्निश्च स्वयमुद्देशी सनमः स्कन्दवाचकः ।
कौशिकोऽस्य मुनिर्वह्निवर्णः षण्मुख उज्ज्वलः ।। 87 ।।

धनुःशक्तिधरो ध्येयः कामदो भयनाशनः ।

(सूर्यमन्त्रः)

ह्रस्वः कृपालुः सेतश्च स्वयमन्यः स्वयं तथा ।। 88 ।।

सतारोऽष्टाक्षरः सौरः क्रमव्युत्क्रमतः पदैः ।
अङ्गानि पद्मयुगलधरो ध्येयोऽरुणो रविः ।
सर्वव्याधिहरः श्रीदो वृष्टिदोऽयं मनुः स्मृतः ।। 89 ।।

---

1. पीतशुक्लारुणो - क । 2. शूलेष्ट - ख ।

(विघ्नेश्वरमन्त्रः)

मोनयदासाप्रप्रक्षि व्यत्यस्तो विघ्नराण्मनुः ।
रक्ताम्बरो रक्ततनू रक्तमाल्यानुलेपनः ।। 90 ।।

[1]महोदरो गजमुखः पाशदन्तांकुशाभये ।
बिभ्रद्ध्येयो विघ्नहरः कामदस्त्वरया ह्ययम् ।। 91 ।।

तत्र तत्र स्थितो विष्णुस्तत्तच्छक्तीः प्रबोधयन् ।
एक एव महाशक्तिः कुरुते सर्वमञ्जसा ।। 92 ।।

(धन्वन्तरिमन्त्रः)

स्वयमुद्देशवान् [2]पूर्वपूर्वो हृदयसंयुतः ।
धान्वन्तरो महामन्त्रः संसृतिव्याधिनाशनः ।
अत्रोक्तसर्वमन्त्राणां नायकोपलसन्निभः ।। 93 ।।

चन्द्रौघकान्ति[3]ममृतोरुकरैर्जगन्ति
सञ्जीवयन्तममितात्मसुखं परेशम् ।
ज्ञानं सुधाकलशमेव च सन्दधानं
शीतांशुमण्डलगतं स्मरताऽत्मसंस्थम् ।। 94 ।।

मूर्ध्नि स्थितादमुत एव सुधां स्रवन्तीं
भ्रूमध्यगाच्च तत एव च तालुसंस्थात् ।
हार्दाच्च नाभिसदनादधरस्थिताच्च
ध्यात्वाभिपूरिततनुर्दुरितानि[4] हन्यात् ।। 95 ।।

---

1. लम्बोदरो - क ।
2. पूर्ववर्णपूर्वो नमोयुतः - क ।
3. अमृतात्मकरैः - क ।
4. दुरितं निहन्यात् - क ।

अज्ञानदुःखभयरोगमहाविषाणि
योगोऽयमाशु विनिहन्ति सुखं च दद्यात् ।
उन्मादविभ्रमहरः परतश्च सान्द्र -
[1]मानन्दमेव पदमापयति स्म नित्यम् ।। 96 ।।

ध्यात्वैव हस्ततलगं स्वमृतं स्रवन्तं
देवं स यस्य शिरसि स्वकरं निधाय ।
आवर्तयेन्मनुमिमं स च वीतरोगः
पापादपैति मनसा यदि भक्तिनम्रः ।। 97 ।।

शतं सहस्रमयुतं लक्षं वाऽऽरोगसंक्षयात् ।
इममेव जपेन्मन्त्रं साधूनां दुःखशान्तये ।। 98 ।।

ज्वरदाहादिशान्त्यर्थं तर्पयेन्मनुनाऽमुना ।
ध्यात्वा हरिं जले सप्तरात्राज्जूतिर्विनश्यति ।। 99 ।।

अयुतामृतसमिद्धोमाद् गोघृतक्षीरसंयुतात् ।
[2]सर्वे रोगा विनश्यन्ति विमुखो न हरेर्यदि ।। 100 ।।

भूताभिचारशान्त्यर्थमपामार्गाहुतिक्रिया ।
द्विगुणाऽमृतया पश्चात् केवलेन घृतेन वा ।। 101 ।।

आयुर्विवृद्धये नित्यं जन्मनक्षत्र एव वा ।
चतुश्चतुर्भिर्दूर्वाभिः क्षीराज्याक्ताभिरिष्यते ।। 102 ।।

सर्वाः क्रिया हरौ भक्ते हरिभक्तैः स्वनुष्ठिताः ।
गुरुभक्तैः सदाचारैः फलन्त्यद्धा न चान्यथा ।। 103 ।।

ब्रह्मान्ता गुरवश्चैव सम्प्रदायप्रवर्तकाः ।
तत्तद्गुणानुसारेण पूज्या [3]मान्याश्च कृत्स्नशः ।। 104 ।।

---

1. स्वानन्दमेव - ख ।

2. सर्वरोगा - ख । 3. ध्येयाश्च - क ।

सर्वेभ्योऽभ्यधिका भक्तिर्विष्णौ स्यादतिनिश्चला ।
लक्ष्मीब्रह्मादिषु ततः क्रमेण स्यात्सुभाविता ।
एवं विद्याः फलिष्यन्ति नान्यथा तु कथञ्चन ।। 105 ।।

शुभान् ध्यायन्ति ये कामान् गुरुदेवप्रसादजान् ।
[1]इतरानात्मपापोत्थांस्तेषां विद्या फलिष्यति ।। 106 ।।

मुक्तावपि च संसारे नाऽऽत्मनो विष्णुतां क्वचित् ।
ब्रह्मरुद्रादिभावं वा साम्यं वाऽऽधिक्यमेव वा ।। 107 ।।

अतद्वशत्वमथवा यः स्मरेत् स तु सिद्धिभाक् ।
नान्यथा सिद्धिमाप्नोति कल्पकोटिशतैरपि ।। 108 ।।

स्मृत्वा गुरुं पूर्वगुरुमादिमूल[2]गुरूंस्तथा ।
देवतां वासुदेवं च विद्याभ्यासी तु सिद्धिभाक् ।। 109 ।।

अवज्ञाता गुरूणां च देवतानां न सिद्ध्यति ।
प्रयाति च तमो घोरं मन्त्रावज्ञाकृदेव च ।। 110 ।।

यस्तारतम्यवेत्ता स्याद्गुरूणां देवतास्वपि ।
भक्तिमान् गुरुदेवेषु वासुदेवे च सिद्ध्यति ।। 111 ।।

गुरुदेवप्रतीपानां विमुखस्तत्प्रिये रतः ।
अकामक्रोधलोभश्च न चिरात् सिद्धिमाप्नुयात् ।। 112

सकामेभ्योऽमितगुणा [3]ह्यकामैस्तु कृताः क्रियाः ।
तस्मादकाम एवालं भजेद्विष्णुं सनातनम् ।। 113 ।।

---

1. 'इतरान् स्वात्मदोषोत्थांस्तेषां' इति, 'अशुभानात्मपापोत्थांस्तेषाम्' इति च - ख ।

2. गुरुं तथा - ख ।

3. याऽकामैस्तु - क।

(वेदोक्तधान्वन्तरमन्त्रः मन्त्राणां फलभेदश्च)

अयं मे हस्त इति च मन्त्रः पूर्वोक्तवत् स्मृतः ।
अत्रोक्तस्तु क्रियाः [1]सर्वमन्त्रेष्वायुपलक्षणम् ।
विजयस्तम्भनादीनि नारसिंहैर्विशेषतः ।। 114 ।।

जामदग्न्यैश्च कार्याणि राघवैर्यादवैरपि ।
वाराहैः स्तम्भनं क्षिप्रं श्रीकराः कथिताः पुरा ।। 115

बहुबाहुं महाकायमुद्युक्तं चोद्यतायुधम् ।
स्मरन् विजयमाप्नोति स्तम्भनादींश्च कारयेत् ।। 116 ।।

वसुपूर्णकरं रत्नपर्वतस्थं विभावयन् ।
वसुसिद्धिमवाप्नोति सेव्यमानमजादिभिः ।
श्रिया विभूतिभिर्युक्तं भावयन् भूतिमाप्नुयात् ।। 117 ।।

यद्यन्मनोगतं तस्य तत्तदाप्नोत्यसंशयम् ।
तथा तथा हरिं ध्यायन् क्रियास्तास्ताश्च साधयन् ।।118।।

श्रिये पद्मानि जुहुयात् सम्प्रीत्या उत्पलानि च ।
शरान् जयाय जुहुयादभिमन्त्र्य प्रयोजयेत् ।। 119 ।।

विद्यायै मन्त्रितं वारि वचां वा तुलसीमपि ।
ब्राह्मीं [2]घृष्टं सुवर्णं वा शतावृत्त्या तु नित्यशः ।। 120 ।।
अकुर्वंश्च क्रिया भक्त्या निरपेक्षो भजन् हरिम् ।
सर्वमेतदवाप्नोति विशेषेण न संशयः ।। 121 ।।

(न्यासप्रभेदाः)

सृष्टिस्थितिलयन्यासाः प्रातिलोम्यानुलोमतः[3] ।

---

1. पूर्वमन्त्रेष्वप्युपलक्षणम् - ख ।

2. घृतम् - क ।

3. प्रतिलोमानुलोमतः - क ।

स्थित्यन्ता एव वर्णानां श्रेष्ठा एव चतुर्दश ।
संहृत्यन्ता मोक्षिणां [1]च एकविंशतिरेव वा ।। 122 ।।

पादहृत्केषु नाभ्यास्य[2]युक्तं च सललाटकम् ।
सनासिकादृग्जान्वोश्च [3]सकोष्ठं सोरुकं तथा ।। 123 ।।

सोरस्कं च सकण्ठं च सभुजद्वयमेव च ।
सगण्डयुग्मं सालीकं सतुन्दक्रोडकं तथा ।। 124 ।।

[4]समूलं च सगुह्यं च सपार्श्वद्वयमेव च ।
सदोर्द्वयं व्यापकं च गलपार्श्वद्वयेन च ।। 125 ।।

[5]ककुत्स्तनद्वयेनापि पृष्ठमूलेन सर्वशः ।
न्यासो यथाक्रमं प्रोक्तो मन्त्रेष्वेतेषु कृत्स्नशः ।
प्रतिमायामात्मनि च न्यासोऽयं सन्निधानकृत् ।। 126 ।।

(यन्त्रलेखनक्रमः)

बीजान्तः साध्यमध्यं च विभक्तदलमन्त्रयुक् ।
[6]वर्णानुप्रातिलोम्येन वृत्तं भूपुरसंयुतम् ।
बीजसन्दृब्धकोणं च यन्त्रं रक्षादिसाधकम् ।। 127 ।।

समं तत्सर्वमन्त्रेषु जप्तं धार्यं तु वा भुवि ।
विलिख्य मण्डले वा तत्पूजयेद्धरिमञ्जसा ।। 128 ।।

(आचार्यलक्षणम्)

[7]प्रतिमालक्षणैर्यावद्युक्त आचार्य उत्तमः ।
सर्ववित्तपसा युक्त आज्ञाशक्तियुतो हरेः ।। 129 ।।

---

1. तु - ख ।　　2. युतं - ख ।
3. सश्रोत्रं - क ।　　4. सतळं - क ।
5. ककुदा स्तन - क ।　　6. वर्णानुप्रतिलोमेतम् - ख ।
7. प्रतिमोक्तलक्षणै - [illegible] ।

यावद्भक्तो यथालब्धैर्गुणैर्युक्तो[1]ऽथ वैष्णवः ।
गुरुः सत्सम्प्रदायज्ञस्तारतम्येन सिद्धिदः ।। 130 ।।

उत्तमादुत्तमा सिद्धिर्धर्ममोक्षादिषु [2]स्फुटम् ।
तस्मादुत्तम आचार्ये लब्धे नातोऽवरं व्रजेत् ।। 131 ।।

एकस्य शिष्यतां प्राप्य तदाज्ञां न विना समम् ।
अवरं वा व्रजेदुच्चगुणश्चेन्नैव दुष्यति ।। 132 ।।

विशेषतो गुणश्च स्याद्देवेष्वप्येवमेव हि ।
तस्मादुत्तममाचार्यं देवेशं चाऽश्रयेद्धरिम् ।। 133 ।।

(उपासनास्वरूपम्)

अपरोक्षदृशेरेव यस्मान्मोक्षो न चान्यथा ।
अपरोक्षदृशिश्चैव श्रवणान्मननादनु ।
सम्यङ्निश्चिततत्त्वस्य निदिध्यासनया भवेत् ।। 134 ।।

द्विविधा सा च सम्प्रोक्ता विष्णुशास्त्रावमर्शनम् ।
एकं ध्यानं हरेरन्यच्चत्वार्यङ्गानि [3]तस्य च ।
यमश्च नियमश्चासा प्राणायाम इतीरितः ।। 135 ।।

(यमनियमयोः स्वरूपकथनम्)

अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ ।। 136 ।।

यमाः शौचं तपस्तुष्टिः स्वाध्यायो हरिपूजनम् ।
नियमा वीरपद्मे च स्वस्तिकाद्यानि चाऽसनम् ।। 137 ।।

---

1. युक्तो हि - ख ।

2. स्फुटा - क ।

3. तत्र - क ।

(प्राणायामः हरिस्मृतियुक्तः ध्यानात्मकः)

रेचकः पूरकश्चैव कुम्भकश्च त्रिधा स्मृतः ।
प्राणायामः स्मृतिं विष्णोर्विना नियम उच्यते ।। 138 ।।

[1]अधीतिस्मृतियुक्तो हि निदिध्यासनमेव हि ।
[2]प्राणायामे च विष्णोर्यत् स्मरणं ध्यानमेव तत् ।। 139 ।।

आसा शौचं प्राणयामो निष्परिग्रहपूर्वकाः ।
तप आद्याः क्रमात् सर्व उत्तरोत्तरतोऽधिकाः ।। 140 ।।

(स्वाध्यायप्रवचनरूपं तपः सदा कार्यम्)

[3]सर्वतः श्रवणाद्यास्तु मुख्या मुक्तिप्रसाधने ।
अज्ञस्य श्रवणं श्रेष्ठमयुक्तेर्मननं तथा ।। 141 ।।

ध्यानं निश्चिततत्त्वस्य तस्माच्छास्त्रावमर्शनम् ।
वरं दशगुणं तस्माद् व्याख्यैकस्य शतोत्तरा ।
अपरोक्षदृशाऽप्येषा कर्तव्या विष्णुतुष्टिदा ।। 142 ।।

य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवेष्यत्यसंशयः ।। 143 ।।

न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।
भविता न च मे तस्मादन्यः प्रियतरो भुवि ।। 144 ।।

शौचासने त्वङ्गमात्रं न पृथग्धर्मकारणम् ।
प्राणायामादयस्तुष्टिपर्यन्ता द्विगुणाधिकाः ।। 145 ।।

स्वाध्यायोऽतः कोटिगुणस्ततोऽनन्तगुणा हरेः ।
पूजा तत्त्रिगुणं ध्यानमिति धर्मक्रमः स्मृतः ।। 146 ।।

---

1. अधीतिः स्मृतियुक्ता तु - क ।

2. प्राणायामोऽपि - ख । 3. सर्वस्माच्छ्रवणाद्यास्तु - ख ।

ऊर्वोरधः पदोरूर्ध्वं विभागेनेति च त्रिधा ।
आसनत्रयमुद्दिष्टं मन्त्रस्मरणपूर्वकम् ।। 147 ।।

(प्राणायामस्वरूपम्)

द्विगुणोत्तरं रेचकादि षोडशादिक्रमेण तु ।
मात्राणां ह्रस्ववर्णस्य कालो मात्रेति शब्द्यते ।। 148 ।।

क्रमेणैवाभ्यसेन्मात्रां वृद्धिमेकाग्रधीः पुनः ।
रेचयित्वा दक्षिणतः पूरयित्वा च वामतः ।
कुम्भकं च सुषुम्नायां विष्णुं वायुं च संस्मरेत् ।। 149 ।।

(देहे नाड्यः)

मूलाधारं समारभ्य त्वामूर्धानमृजुस्थिता ।
मध्ये सुषुम्ना विज्ञेया [1]वज्रिकाऽऽर्या प्रकाशिका ।। 150 ।।

वैद्युता ब्रह्मनाडीति सैव पञ्चप्रभेदिनी ।
पृष्ठवामाग्रदक्षान्तर्भेदास्तेषु क्रमेण तु ।। 151 ।।

हरिन्नीलः सितः पिङ्गो लोहितश्चात्र केशवः ।
प्रद्युम्नादिस्वरूपेण ध्येयः सिद्धिमभीप्सता ।। 152 ।।

मूले च नाभौ हृदयेन्द्रयोनिर्भ्रूमध्य[2]मूर्ध्निद्विषडन्तकेषु ।
चतुःषडष्टद्विचतुर्द्विषट्कदलेषु पद्मेषु सितारुणेषु ।

पञ्चात्मकोऽसौ भगवान् सदैव ध्येयो हृदन्तान्यरुणानि तानि ।
त्रिकोणवह्नौ च षडश्रवायौ द्विस्तावदत्ररविवृत्तशशिस्थवह्नौ ।।

वृत्ते विधावपि विचिन्त्यमिदं दशार्ध ।
रूपं सितं तदखिलं हृदयात् परस्थम् ।। 153 ।।

---

1. वज्रिकाऽऽर्याऽवभासिनी - ख ।

2. मूर्धद्विषडन्तकेषु - क ।

इडा च पिङ्गला चैव वज्रिका धारिणी तथा ।
सुषुम्नायाश्चतुर्दिक्षु वज्रिकाद्यासु तत्र च ।। 154 ।।

चतुर्मूर्तिः स भगवान् हृदये संव्यवस्थितः ।
द्वासप्ततिसहस्राणि नाड्योऽन्यास्तु प्रधानतः ।। 155 ।।

बृहतीसहस्रस्पर्शानामृचां वाच्योऽत्र केशवः ।
रूपाणां लक्षणं तेषां रहस्यत्वान्न कथ्यते ।
विष्णुना ब्रह्मणे प्रोक्तं ग्रन्थसङ्कोचतस्तथा ।। 156 ।।

(भक्तिरेव मुक्तिसाधिका)

खण्डस्मृतिर्धारणा स्यादखण्डा ध्यानमुच्यते ।
अप्रयत्नात् समाधिश्च दर्शनं चिरयाऽनया ।
अथवा सततं शास्त्रविमर्शेन भविष्यति ।। 157 ।।

परमस्नेहसंयुक्तयथार्थज्ञानतो भवेत् ।
सा भक्तिरिति विज्ञेया साधनं भोगमोक्षयोः ।। 158 ।।
मुख्यमेषैव नान्यत् स्यात् सर्वं व्यर्थं तया विना ।
सैकाऽप्यभीष्टफलदा मोक्षो दर्शनयुक्तया ।। 159 ।।
दर्शनं च तया हीनं व्यर्थमन्यत् किमुच्यते ।
योग्यं तु दर्शनं नैव तया हीनं भविष्यति ।। 160 ।।

(सत्-चित्-आनन्द-आत्मेत्युपास्यो विष्णुः)

आनन्दचित्सदिति पूर्वगुणैः समस्तैः
　मत्स्यादिभिर्विधिपरैर्भगवान् क्रमेण ।
ध्यातोऽधिकैरधिगुणोऽधिकमेव सौख्यं
　मुक्तौ ददाति सततं परमस्वरूपः ।। 161 ।।
निर्दोषाखिलसम्पूर्णगुणेन हरिणा स्वयम् ।
ब्रह्मणे कथितात्तन्त्रसारादुद्धृत्य सादरम् ।। 162 ।।

(ग्रन्थस्य महत्त्वज्ञापनम्)

आनन्दतीर्थमुनिना कृतो ग्रन्थोऽयमञ्जसा ।
ग्रन्थोऽयं पाठमात्रेण सकलाभीष्टसिद्धिदः ।
किमु ज्ञानादनुष्ठानादुभयस्मात् पुनः किमु ।। 163 ।।

यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
बट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपु-
र्मध्वो यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ।। 164 ।।

अशेषदोषोज्झितपूर्णसद्गुणं सदा विशेषावगतोरुरूपम् ।
नमामि नारायणमप्रतीपं सदा प्रियेभ्यः प्रियमादरेण ।। 165 ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमत्तन्त्रसारसङ्ग्रहे चतुर्थोऽध्यायः सम्पूर्णः ।।

श्रीमदानन्दतीर्थभगवत्पादाचार्यप्रणीतः

# तन्त्रसारसङ्ग्रहः

विठ्ठलाचार्यसुतश्रीनिवासाचार्यविरचितगूढार्थसङ्ग्रहव्याख्यासहितः

## ।। प्रथमोऽध्यायः ।।

(मङ्गलाचरणम्)

रमापतिं ब्रह्मसूर्येन्द्रपूर्वगीर्वाणसंवन्दितपादपद्मम् ।
अगण्यकल्याणसुपूर्णसद्गुणं नारायणं मध्वगुरुं नमामि ।। 1 ।।
व्यासं नृसिंहं हयशीर्षमीशं कृष्णं कृपाब्धिं गुरुपूजितं च ।
रमां विरिञ्चादिजगज्जनित्रीं वन्दे सदाहं सकलेष्टदात्रीम् ।।
श्रीमदानन्दतीर्थार्यान् नत्वा सर्वान् गुरूनपि ।
यथाबोधं तन्त्रसारगूढवाक्यार्थ उच्यते ।।

अथ परमकारुणिको भगवानानन्दतीर्थाचार्यवर्यः सकलसज्जनानुजिघृक्षया सर्वैर्भगवत्प्रतिपादकमन्त्रजपतत्पूजाहोमादेः कर्तव्यत्वात् तदर्थं जपादिकमनुष्ठितवतां ([1]यावतोऽननुष्ठाने) क्रियापूर्तिर्नास्ति तावत्समस्तमपि सेतिकर्तव्यताकं वक्तुं विष्णूपपादिततन्त्रसारसङ्ग्रहरूपं सकलपुरुषार्थप्रवर्षकं कल्पपादपं ग्रन्थं कर्तुकामः स्वयमन्तरायविधुरोऽपि निरन्तरायपरिसमाप्त्यादिफलकं परममङ्गलं श्रीरमानाथस्तवनरूपं मङ्गलं ग्रन्थादौ निबध्नाति -

तं. स.- जयत्यब्जभवेशेन्द्रवन्दितः कमलापतिः ।
अनन्तविभवानन्दशक्तिज्ञानादिसद्गुणः ।। 1 ।।

जयति उत्कृष्टो वर्तते । तथा चोक्तं - 'जयेर्जयाभिभवयोः'

1. यदनुष्ठाने ।

इत्यादिना । सकलवाङ्मनोनियामिकाया अपि स्तुतेरावश्यकत्वात् नारायण इत्यनुक्त्वा कमलापतिरित्युक्तम् । वस्तुतः पृथगकरणं अत्यन्तरङ्गत्वज्ञापनार्थम् इति ज्ञेयम् ।

नन्वितरपरित्यागेन भगवद्वन्दने किं (निमित्त)मित्यतस्तस्य वन्द्यताप्रयोजकवैशिष्ट्योपपादकत्वादिति भावेनोक्तं - **अब्जभवेशेन्द्रवन्दित** इति । सर्वदेवाधीशत्वेन प्रसिद्धब्रह्मेन्द्रवन्द्यत्वे तदितरचेतनवन्द्यत्वं कैमुत्यन्यायेनैव सेत्स्यतीति तन्मात्रग्रहणं कृतम् । **'वन्दितः'** वदि अभिवादनस्तुत्योरिति धातोः । न च ब्रह्मादिवन्द्यत्वमसम्भावितमित्याह - **कमलापतिरिति** । तथा च कामतो विधिरुद्रादिपददातृत्वादिना श्रुतिप्रसिद्धाया रमाया । पतित्वेन तदधीनब्रह्मादिवन्द्यत्वं नाऽसम्भावितमिति भावः ।

(अनन्तविभवानन्देति पदस्य चतुर्धा व्याख्यानम्)

सम्भावकान्तरमाह - **अनन्तेति** । अनन्तेति विभवा-दीनां विशेषणम् । अनन्तविभवानन्दशक्तिज्ञानादयः सद्गुणाः यस्य स तथोक्तः । विभवः महैश्वर्यम् । सद्गुणः उत्तमगुणः । **'सच्छब्द उत्तमं ब्रूयात्'** इत्युक्तेः। गुणानामुत्तमत्वं नाम प्रत्येकशो निरवधिक-त्वम् । तथा चोक्तं - **'प्रत्येकशो गुणानां तु निस्सीमत्वमुदीर्यते'** इति । सन्तः निर्दुष्टा इत्यर्थः । गुणानामदुष्टत्वं नाम उत्पत्तिविना-शशून्यत्वं वृद्धिह्रासराहित्यं अपराधीनत्वं दोषासमानाधिकरणत्वं च। एतेन निर्दोषत्वमपि भगवतो लभ्यते । गुणवत्वकथनेन वा निर्दोषत्व-मुक्तं भवति । दोषाभावस्याऽपि लोकवेदयोः प्रसिद्धत्वात् । यथोक्तं - **'दोषाभावो गुण इति प्रसिद्धो लौकिकेष्वपि'** इति ।

अथवा विविधं भवनं येषां ते विभवाः । तादृशा आनन्दादिगुणा यस्य स तथोक्तः । तथा च भगवद्गुणाः प्रत्येकं अनन्तरूपगुण-क्रियावयवाद्यात्मका इति । तदुक्तं - **'सर्वे सर्वगुणात्मानः सर्वकर्तार एव च'** इति । तथा चैतादृशमहामाहात्म्योपेतस्य ब्रह्मादिवन्द्यत्वं सम्भावितमिति भावः ।

यद्वा अनन्त इति पृथग्वैशिष्ट्यमाचष्टे । कमलापतिरिति ईशताम् । सर्वस्वभक्तेष्टदातृक्त्वेन प्रसिद्धायाः कमलायाः पतेर्भगवतः कथं नेष्टदातृत्वमिति । इष्टत्वस्य सिद्धत्वात् । अधिकृतत्वं तु सर्वशास्त्रार्थभूतस्य भगवतः प्रसिद्धमिति नोक्तम् ।

अथवा नानिर्धारितस्वरूपस्य स्तवनं युक्तम् । न च लक्षणं विना निर्धारणमिति विशेषणद्वयम् । आद्यलक्षणेन सर्वोत्तमत्वेन वन्द्यत्वमभिप्रेतमिति न रमायामतिव्याप्तिः ।। 1 ।।

इदानीं चिकीर्षितग्रन्थस्योपादेयताप्रयोजक[1]प्रामाण्यज्ञापनाय [2]आप्तिमूलतां दर्शयति - **विधिम्** इति ।

**तं. स.- विधिं विधाय सर्गादौ तेन पृष्टोऽब्जलोचनः ।**
**आह देवो रमोत्सङ्गविलसत्पादपल्लवः ।। 2 ।।**

अब्जलोचनो भगवान्। अब्जलोचनशब्दो भगवत्येव प्रसिद्धः । तदुक्तमैतरेयभाष्ये - **'प्रसिद्धश्च पुण्डरीकाक्ष'** इति भगवान् नारायणः। **'पुण्डरीकेक्षणो विष्णुः सहस्राक्षः सुराधिप'** इति । एतेन वक्तानुकूल्यमुक्तं भवति । भगवतो विवक्षितार्थतत्त्वज्ञानादिमत्वस्य सिद्धत्वात् । आह विधय इति शेषः ।

एतेन चतुर्मुखस्य त्वनादितः सर्वदोषहीनत्वेन गुणाधिकत्वेन च प्रसिद्धत्वात् श्रोत्रानुकूल्यमुक्तं भवति ।

ननु श्रोतुरनुकूलत्वेऽपि इन्द्रविरोचनवत् सह श्रोतुरप्रयोजकत्वाद् अन्यथोपदेशः किं न स्यादित्यतः तदा विरिञ्चेतरेषां सृष्टिरेव नेत्याशयेनाह - **सर्गादाविति** । **विधिं विधायेति** । विधिसृष्ट्यनन्तरमेवेति भावः । प्रसङ्गानुकूल्यं दर्शयति । **तेन पृष्ट इति** । प्रश्नप्रकारमुत्तरत्र दर्शयिष्यामः। तथा च तत्त्वप्रदर्शनोत्तरकाले परिहासा-

---
1. प्रकाश । 2. अपि ।

दिप्रसङ्गाभावात् प्रसङ्गानुकूल्यं सिद्धमिति भावः । उपदेशकाले उपदेष्टुः प्रसादाभावे उपदिष्टं न फलवद् भवति । यथोक्तं - **'नातिप्रसन्नहृदय'** इत्यादिना। अतो वाऽऽह - **अब्जलोचन इति** । प्रसादेनाब्जवत् विकसितलोचन इत्यर्थः । प्रसादसम्भावकमाह - **रमोत्सङ्ग इति** । स्त्रीसन्निधानेन प्रसादो भवति इति लोकन्यायेनोक्तम् । वस्तुतस्तु न रमयाऽतिशयोऽस्ति । अनन्यापेक्षस्वरूपभूतनित्याभिव्यक्तनिरवधिकसुखमूलत्वेनेदं प्रमाणमिति भावः ।। 2 ।।

एवं प्रामाण्यं प्रसाध्य [1]सर्वोत्तमः, सकलगुणपूर्णः कः? किं तत्र प्रमाणम्? जप्याः मन्त्राः के? तत्प्रतिपाद्यः कः? कथं तद्ध्यानं कर्तव्यम्? पूज्यः कः? पूजा च कथं कार्या? अज्ञानां साक्षाद् भगवत्पूजायाः कर्तुमशक्यत्वेन प्रतिमायामेव कर्तव्यत्वात् तदर्थं प्रतिमा निर्मातव्या तन्निर्माणविधिः कः? तल्लक्षणं च किम्? **अप्रतिष्ठितस्य बिम्बस्य पूजनं सिद्धहानिकृत्** इति उक्तेः अवश्यं प्रतिमा कार्या । सा च (कथं) कर्तव्येत्यादिना प्रकारेण स्वयं ज्ञात्वाऽपि विशेषार्थज्ञानाय स्थापनाय वा सकलसल्लोकानुग्रहेच्छया पृष्टो भगवान् नारायणः किमवोचदित्याह - **अहम्** इत्यादिना ।

**तं. स.- अहमेकोऽखिलगुणो वाचकः प्रणवो मम ।**
**अकाराद्यतिशान्तान्तः सोऽयमष्टाक्षरो मतः ।। 3।।**

एको मुख्यः सर्वोत्तमः । अहमेक एव अखिलगुणः । सदागमत्वावच्छिन्नः सर्वोऽपि प्रमाणमित्याशयेन प्रथमतः प्रणवः प्रमाणमित्याह - **वाचक इति** । **'ओतत्ववाची ह्योङ्कारो वक्त्यसौ तद्गुणोतताम्'** । **'ओतमस्मिन् जगत्सर्वम्' 'अत्युच्चश्चाखिलैर्गुणैः' 'ओमशेषगुणाधार'** इत्यादिना प्रणवस्याखिलगुण[2]पूर्णताप्रतिपादकत्वं प्रमितमिति भावः । प्रणवोऽष्टमूर्तिप्रतिपादकोऽपि इति वक्तुं तस्या-

---

1. X X X X 2. पूर्णतया ।

ष्टाक्षरादिरूपत्वमाह - **अकारादीत्यादि** । सोऽयं प्रणवोऽष्टाक्षरः। अष्ट अक्षराणि यस्मिन् स तथोक्तः। अष्टाक्षरत्वविवरणम् **अकारादीति**। अकारोकारमकारनादबिन्दुघोषशान्तातिशान्ताख्याष्टाक्षरोपेत इति भावः।

यद्यपि नादादयो नाक्षरधर्माः किन्तु स्वरविशेषाः । तथापि अर्थप्रतिपादकत्वसाम्यादष्टाक्षरत्वमुपचरितम् ।। 3 ।।

प्रतिपाद्यमूर्तीराह - **स इति** ।

**तं. स.- स विश्वतैजसप्राज्ञतुरीयात्मान्तरात्मनाम् ।**
**परमात्मज्ञानात्मयुजां मद्रूपाणां च वाचकः ।।4।।**

न केवलं मम मद्रूपाणां चेति चार्थः । 'न वा एकेन' इत्युक्तेः नात्राक्षराधिक्येन छन्दोभङ्गः शङ्कनीयः ।। 4 ।।

मातृकामन्त्राणापि प्रणवव्याख्यानरूपत्वेन मातृकाप्रतिपाद्य-पञ्चाशन्मूर्तयः प्रणवप्रतिपाद्याष्टमूर्तिव्यक्ता इत्याह - **तद्रूपभेदा इति**।

**तं. स.- तद्रूपभेदाः पञ्चाशन्मूर्तयो मम चापराः ।**
**पञ्चाशद्वर्णवाच्यास्ता वर्णास्तारार्णभेदिताः ।।5।।**

तैर्विश्वादिरूपैर्भिद्यन्ते विश्लिष्यन्त इति तद्रूपभेदाः । अत्र यद्व-क्तव्यं तदुत्तरत्र वक्ष्यते । अपराश्चतुर्मूर्तयः सन्ति इति शेषः । **तारा-र्णभेदिता** इति प्रणवव्याख्यानत्वेन स्थिता इत्यर्थः । तद्वक्ष्यति चैतत्। पञ्चाशन्मन्त्रा अजादिमूर्तिप्रतिपादका एव । तारं तु अष्टाक्षररूपं तत्प्रतिपाद्यान् विश्वादीनपि प्रतिपादयत् प्रणवप्रतिपाद्यं गुणपूर्णं नारा-यणं प्रतिपादयति इति। एवमुपर्यपि द्रष्टव्यम् ।।5।।

अष्टभ्यो वर्णेभ्यो कथं पञ्चाशत्प्रभेद इत्यत आह - **द्विरष्ट इति**।

तं. स.- द्विरष्टपञ्चकचतुःपञ्चेत्येवाष्टवर्गगाः ।
अज आनन्द इन्द्रेशावुग्र ऊर्ज ऋतम्भरः ।। 6 ।।

द्विरष्टपञ्चानां वर्गाणां समूहः पञ्च चतुश्च पञ्च च । ततश्च प्रणवगताकारेण अकारमारभ्य अः इत्यन्ताः षोडशवर्णा विभिद्यन्ते । उकारेण (कवर्गः) (मकारेण चवर्गः) नादेन टवर्गः । (बिन्दुना तवर्गः) घोषेण पवर्गः । शान्तेन यरलवाश्चत्वारो वर्णाः । अतिशान्तेन श ष स ह ळ इति पञ्चवर्णा विभिद्यन्त इति भावः । एतेन अष्टमूर्तिभिः [1]पञ्चाशन्मूर्तीनां व्यक्तिश्चैवानैनैव क्रमेणेति सूचितं भवति । पञ्चाशन्मूर्तीराह - अज इति । न जायत इत्यजः । आनन्दः सुखरूपी। इन्द्रः परमैश्वर्यवान् । ईशः स्वामी । उग्रः क्रूरः । नृसिंहो वा । ऊर्जः बलवान् । ऋतूपलक्षितं कालं भरति इति ऋतम्भरः ।। 6 ।।

तं. स.- ॠघलृशो लॄजिरेकात्मैर ओजोभृदौरसः ।
अन्तोऽर्धगर्भः कपिलः खपतिर्गरुडासनः ।। 7 ।।

ॠः दनुं घातयति दीपयति पुत्रहननेन इति ॠघः । लृः अदितिः तस्याः संश्रयो यस्मात् स लृशः । लॄ दितिः तां जयति इति लॄजिः । पुत्रहननेन । एकात्मा मुख्यस्वामी । ऐरः वायुमित्रं रुद्रं रमयति प्रलय इति वा ऐरः । ओजोभृत् तेजःस्वामी । औरसः उरसि भवः औ ब्रह्मा स रसो वीर्यं यस्य सः । अन्तयति नाशयति इत्यन्तः । आसमन्ताद् ऋद्धा ब्रह्मादयो गर्भे यस्येत्यर्धगर्भः । कपिलस्तन्नामा । खानामिन्द्रियाणां पतिः खपतिः । गरुडासनः गरुडवाहनः ।।7।।

तं. स.- घर्मो ङसारश्चार्वाङ्गश्छन्दोगम्यो जनार्दनः ।
झाटितारिर्ञमष्टङ्की ठलको डरको ढरी ।। 8 ।।

---

1. पञ्चमूर्तिनाम् ।

घर्मः श्रान्तसन्तापकः । ङेषु - विषयेषु सारः । चारूणि अङ्गानि अस्येति चार्वङ्गः । छन्दोगम्यो वेदप्रतिपाद्यः । दुष्टजनमर्दकत्वात् जनार्दनः । झाटिता निर्जिता अरयो येन झाटितारिः । ञेन घर्घरध्वनिना मीयत इति ञं नायकं मानयति इति वा । टंकी टङ्कायुधवान् । ठलकः ठलयोः रुद्रेन्द्रयोः कं सुखं यस्मात् । *ठकल इति पाठे* ठकौ रुद्रब्रह्माणौ रुद्रवायू वा लाति आददातीति वा । [1]रविमण्डलाग्नि-प्रभयोः कः प्रकाशो यस्मात् इति डरकः । ढं निर्गुणं मुक्तं रमयति इति । ढरी मुक्तकृतक्रीडावान् वा ।। ८ ।।

**तं. स.- णात्मा तारस्थभो दण्डी धन्वी नम्यः परः फली ।**
**बली भगो मनुर्यज्ञो रामो लक्ष्मीपतिर्वरः ।। ९ ।।**

णात्मा ज्ञानात्मा । तारयति इति तारः । थं शिलोच्चयं गोवर्धनं बिभर्ति इति थभः । था स्थिरा भा यस्य स इति वा । दण्डवान् दण्डी। धन्वी धनुर्धारी । नम्यः सर्ववन्द्यः । परः सर्वोत्कृष्टः । फली सुखफलवान् । बली बलवान् । भग ऐश्वर्यवान् । मनुर्ज्ञानवान् । यज्ञस्तन्नामा । रामो मनोहरः । लक्ष्मीपतिः रमायाः स्वामी । वरः श्रेष्ठः ।। ९ ।।

**तं. स.- शान्तसंवित् षड्गुणश्च सारात्मा हंसळालुकौ ।**
**पञ्चाशन्मूर्तयस्त्वेता ममाऽकारादिलक्षकाः ।। 10।।**

शान्ता सर्वसुखदायिनी संविद्यस्य स शान्तसंवित् । ऐश्वर्यादिषड्-गुणः । सार उत्कृष्ट आत्मा देहो यस्य सः सारात्मा अप्राकृतविग्रहः। हंसः शुद्धः । लौ मुक्तौ च तौ आलू ब्रह्मेन्द्रौ लालू तयोः कं सुखं यस्मात् स लालुकः । द्वाभ्यां जगदुपलक्ष्यते । आश्च लुश्चेति। मम

---

1. डं - रविमण्डलम् । रं - अग्निमण्डलं तयोः कः प्रकाशः यस्मादिति पाठेन भाव्यमिति भाति ।

पञ्चाशन्मूर्तयः अकारादयो लक्षकाः लक्षणवत्तया प्रतिपादका यासां ताः । वर्णाभिव्यक्तिकथनप्रसङ्गे संयुक्ताक्षरस्य पृथगभिव्यक्त्यभावात् क्षकाराकथनम् । यथा च [1]द्वर्णसमानवर्णवन्नामतां देवतात्वमेवं कषवर्णद्वयात्मकस्य क्षस्य पुरुषसिंहदेवतात्वम्। ध्यानेऽनुक्तिस्तु पूर्वमप्रकृतत्वात् । पञ्चाशद्वर्णदेवताध्यानमेव क्षवर्णदेवनृसिंहध्यानम् । मत्स्यादिषु केशवादिषु स्थितस्य यथा ध्यानं भिन्नं केशवादिनिविष्टस्यापि तिलकधारणवर्णदेवतात्वेन ध्याने भिन्नत्वमेव x x x x x x ।। 10 ।।

इदानीं नारायणमन्त्राभिव्यक्तिमाह - **नारायणेति** । पञ्चविंशत्यक्षरनारायणमन्त्रव्यावृत्त्यर्थमष्टाक्षरम् इति ।

**तं. स.- नारायणाष्टाक्षरश्च ताराष्टाक्षरभेदवान् ।**
**आद्यैस्तारचतुर्वर्णैर्भिन्ना व्याहृतयः क्रमात् ।। 11।।**
**अनिरुद्धादिकास्तासां देवता व्युत्क्रमेण वा ।**
**ताश्चतन्मूर्तयस्त्वेव द्वादशार्णपदोदिताः ।। 12 ।।**
**नारायणाष्टाक्षराच्च व्याहृतिभ्यस्तथैव च ।**
**विभेदो द्वादशार्णानां केशवाद्याश्च देवताः ।। 13।।**
**नारायणाष्टाक्षराच्च व्याहृतित्रिगुणात्पुनः ।**
**वेदमाता तु गायत्री द्विगुणा द्वादशाक्षरात् ।। 14।।**

व्याहृत्युत्पत्तिमाह - **आद्यैरिति** । व्याहृतयः चत्वारः । चतुष्ट्वलाभप्रकारं वक्ष्यति । **अनिरुद्धादिका इति** । अनिरुद्ध प्रद्युम्नसङ्कर्षणवासुदेवाः । सन्न्यासिभिर्ध्यानादेः व्युत्क्रमेणैव कर्तव्यत्वात् अनिरुद्धादिक्रमो गृहीतः । विवक्षया त्वाह - **व्युत्क्रमेणैवेति** । उक्तक्रमापेक्षया व्युत्क्रमेण । वस्तुतः क्रमेण वासुदेवादिक्रमेणेति यावत् । उक्तातिदेशसौकर्याय द्वादशाक्षरप्रतिपाद्यमूर्तीराह - **ता इति** । द्वादशा-

---

1. क्षकारस्य क-ष-वर्णद्वयात्मकत्वात् तद्देवताया अपि पुरुषसिंहात्मकत्वम् इति पाठेन भाव्यमिति भाति ।

क्षरमन्त्रप्रतिपाद्यमूर्तीराह केशवाद्या इति । नारायणाष्टाक्षरात् 'व्याहृतित्रिगुणात्' त्रिगुणितव्याहृतिभ्य इति यावत् । पुनश्च व्याहृतेः । एतेन चतुर्गुणतव्याहृतीनां षोडशत्वात् तैः, नारायणमन्त्रगताष्टवर्णेभ्यः तैः चतुर्विंशतिवर्णैः गायत्री वर्णभेदिता इत्युक्तं भवति । वेदमातेति विशेषणम् इतरगायत्रीव्यावृत्यर्थम् । वेदोत्पादकत्वेन, तत्पठितॄणां ब्राह्मण्यसम्पादकत्वेन वेदपोषकत्वाद् वा गायत्री वेदमाता इत्यर्थः ।

गायत्री वर्णसङ्ख्यामाह - **द्विगुणेति** । द्वादशाक्षरादिति पञ्चमी ल्यब्लोपनिमित्ता । द्वादशाक्षरमपेक्ष्य द्विगुणेत्यर्थः । द्विगुणात् इति पाठे तु द्विगुणिता द्वादशाक्षरादपि गायत्री व्यक्तेत्यर्थः ।

**(व्याहृतित्रिगुणात् इत्यस्यानेकधा व्याख्यानम्)**

अथवा व्याहृतिर्व्याहरणम् - तथा च व्याहृतित्रिगुणात् त्रिगुणितत्वेन व्याहृतात् नारायणाष्टाक्षराच्च गायत्री व्यक्तेत्यर्थः । पुनर्द्वादशाक्षरात् द्विगुणाच्चेति च शब्दयोस्सम्बन्धः । यद्वा च शब्दस्य त्रिगुणादित्यर्थः । अव्ययानामनेकार्थत्वात् । एवं च त्रिगुणान्नारायणाष्टाक्षरात् गायत्री भेदिता । व्याहृतिमात्रेणाऽपि गायत्रीव्यक्तिमाह - **व्याहृतीति** । व्याहृतिशब्देन वर्णा लक्ष्यन्ते । तथा च त्रिगुणैः व्याहृतिगताष्टवर्णैः पुनर्गायत्री व्यक्तेति भावः ।

अथवा व्याहृतित्रिगुणात् इत्यत्र विद्यमानं त्रिगुणात् इति पदं बुद्ध्या विविक्तमाकृष्यते । एवं च त्रिगुणान्नारायणाष्टाक्षराद् गायत्री भेदिता । द्वादशाक्षरादित्युक्तं द्वादशाक्षरं विशिनष्टि - ***व्याहृतित्रिगुणादिति*** । व्याहृत्यपेक्षया त्रिगुणात् द्वादशाक्षरात् द्विगुणा गायत्रीत्यर्थः ।

पुनः पुनर्नारायणाष्टाक्षरसहितव्याहृतिभिर्द्वादशाक्षरोत्पत्तिः उक्ता। इदानीं व्याहृतीभिरपि द्वादशाक्षरोत्पत्तिरिति ध्येयम् ।। 11-14।।

**तं. स.- चतुर्विंशन्मूर्तयोऽस्याः कथिताः वर्णदेवताः ।**
**तद्भेदः पौरुषं सूक्तं वेदाः पुरुषसूक्तगाः ।। 15।।**

अस्या गायत्र्याः चतुर्विंशन्मूर्तयः केशवाद्याः कथिताः । नन्वेकस्याः चतुर्विंशन्मूर्तीनां कथं देवतात्वमित्यत उक्तम् - **वर्णेति** । तथा च वर्णदेवतात्वेनैव तद्देवतात्वम् । वर्णदेवता इति मूर्तीनां विशेषम्। अथवा अस्याः वर्णानां देवताः नित्यसापेक्षत्वात् समासः । पौरुषं पुरुषप्रतिपादकं वर्गत्रयात्मकं सूक्तम् । तद्भेदः गायत्रीभेदः । भिद्यते अभिव्यज्यत इति भेदः । वेदाः पुरुषसूक्तात् गच्छन्ति उद्गच्छन्ति इति पुरुषसूक्तगाः ।। 15 ।।

**तं. स.- वैदिकाः सर्वशब्दाश्च तस्मात्सर्वाभिधोऽस्म्यहम् ।**
**पञ्चाशद्वर्णभिन्नाश्च सर्वशब्दा अतोऽपि च ।। 16।।**

**वैदिका इति** । सर्वसंस्कृतशब्दाः वैदिकाः वेदेभ्योऽभिव्यक्ता इत्यर्थः। यद्वा वैदिकाः वेदसम्बन्धिनः संस्कृता इति यावत् । सर्वशब्दस्य पुरुषसूक्तगा इति पूर्वेणान्वयः । फलितमाह **तस्मादिति** । मद्वाचकप्रणवव्याख्यानरूपाष्टाक्षरव्याहृत्यादेः परम्परया सर्वशब्दानां अपि व्याख्यानरूपत्वादिति भावः । निमित्तान्तरमाह - **पञ्चाशद् इति** । अपिरभिव्याप्तौ । एवं च सर्वशब्दा अपि पञ्चाशद्वर्णभिन्नाः ततश्च सर्वाभिध इत्यर्थः । अथवा ननु सर्वाभिधत्वं कथं प्राकृतशब्दवाच्यत्वप्रकारस्यानुक्तत्वात् इत्यत आह - **पञ्चाशद् इति** । सर्वप्राकृतशब्दाः पञ्चाशद्वर्णभिन्नाः ततोऽपि सर्वाभिध इत्यर्थः । न केवलं सर्वे वैदिकाः प्राकृताः शब्दाः भगवद्वाचका अपि तु दधिमथनगजबृम्हितशब्दा अपि [1]ना(दा)दि रूपत्वेन भगवद्वाचका इति सूचनार्थं सर्वेत्युक्तम् । तेषां शब्दानां भगवद्वाचकत्वप्रकारश्च कर्मनिर्णये दर्शितः ।

---

1. नानादि ।

'दध्नो मथनशब्दश्चाप्यन्तर्नादस्वरूपतः ।
भीषकत्वं हरेः ब्रूयादन्तर्नादो हि भीषणे ।
गजबृंहितमप्येवं धिक्कारसहितं वदेत् ।
स्वरितेन समायोगात् द्विक्कृतौ स्वरितो यतः ।
महामन्त्रजलाद्यैश्च युक्तमेतादृशं वदेत् ।
पादभूपा च धिक्कारं तत् कृतं स्वरितो वदेत्' ।।

इत्यादिना ।। 16 ।।

तं. स.- ऋषिश्च देवतैकोऽहं तारादीनां विशेषतः ।
छन्दो मदीया गायत्री ताराष्टाक्षरयोर्मता ।। 17।।

'यो ह वाऽविदितछन्दोदैवतेन ब्राह्मणेन' इत्यादि श्रुत्या, तथा 'देवर्षिच्छन्दांसि सम्यगेव विचारयेत् । मृत्युः स्याद् देवताऽज्ञाने छन्दोहीने तु निष्फलम्' इत्यादि स्मृत्या च ऋष्याद्यज्ञाने अनर्थ उक्तः । उक्तमन्त्राणां क्रमेण ऋष्याद्याह - ऋषिरित्यादिना । यद्यपि वक्ष्यमाणसर्वमन्त्राणां ऋषिर्देवता च हरिरेव । तथाऽपि तेषां अन्ये अमुख्या ऋषयो वर्तन्ते । नत्वेकः । अतो विशेषत इत्युक्तम् । 'मदीया' दैवीगायत्री इत्यर्थः ।

'अङ्गन्यासं तथा ध्यानं सम्यगेव समभ्यसेत् ।
न्यासहीने हरेदायुर्ध्यान हीने तु निष्फलम्' ।।

इति [1]ध्यानाद्यभावे अनर्थावगमात् ।। 17 ।।

तं. स.- उद्यद्भास्वत्समाभासश्चिदानन्दैकदेहवान् ।
चक्रशङ्खगदापद्मधरो ध्येयोऽहमीश्वरः ।। 18 ।।
लक्ष्मीधराभ्यामाश्लिष्टः स्वमूर्तिगणमध्यगः ।
ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि ।। 19 ।।

---

1. ध्यानाभावेन अर्थागमात् ।

सेव्यमानोऽधिकं भक्त्या नित्यनिःशेषशक्तिमान् ।
मूर्तयोऽष्टावपि ध्येयाश्चक्रशङ्खवराभयैः ।
युक्ताः प्रदीपवर्णाश्च सर्वाभरणभूषिताः ।। 20।।

ध्यानं तावदाह - उद्यदित्यादिना । लक्ष्मीधराभ्यामाश्लिष्ट इत्यादिना वक्ष्यमाणसकलावरणसमवेतत्वमुक्तं भवति । तथा हि । लक्ष्मीधराभ्यामित्यनेन 'लक्ष्मीधरे यजेत् तत्र' इत्येतदुक्तं भवति । स्वमूर्तिगणेत्यनेन हृदयादीनि इत्यारभ्य अनन्तं विश्वरूपं चेत्यन्तं उक्तावरणसमवेतत्वमुक्तम् । ब्रह्मवाग्वित्यादिना अनन्तब्रह्मेत्यादिनोक्त सर्वावरणसमवेत्वमुक्तं ज्ञेयम् ।। 18-20 ।।

तं. स.- तादृग्रूपाश्च पञ्चाशज्ज्ञानमुद्राभयोद्यताः ।
टङ्की धन्वी च दण्डी च तत्तद्युक्तास्तु वामतः ।।21।।
वासुदेवादिकाः शुक्लरक्तपीतासितोज्वलाः ।
चक्रशङ्खगदाब्जेतः प्रथमो मुसली हली ।। 22।।
सशङ्खचक्रस्त्वपरस्तृतीयः शार्ङ्गबाणवान् ।
सशङ्खचक्रस्तुर्यस्तु चक्रशङ्खासिचर्मवान् ।। 23।।
केशवो मधुसूदनः सङ्कर्षणदामोदरौ ।
सवासुदेवप्रद्युम्ना दक्षोच्चकरशङ्खिनः ।। 24 ।।
विष्णुमाधवानिरुद्धपुरुषोत्तमाधोक्षजाः ।
जनार्दनश्च वामोच्चकरस्थितदरा मताः ।। 25।।
गोविन्दश्च त्रिविक्रमस्सश्रीधरहृषीकपाः ।
नृसिंहश्चाच्युतश्चैव वामाधःकरशङ्खिनः ।। 26।।
वामनः सनारायणः पद्मनाभ उपेन्द्रकः ।
हरिः कृष्णश्च दक्षाधःकरे शङ्खधरा मताः ।।27।।

शङ्खचक्रगदापद्मधराश्चैते हि सर्वशः ।
क्रमव्युत्क्रमपद्मादिगदादिव्युत्क्रमस्तथा ।
अर्धक्रमः सान्तरश्च षट्सुषट्स्वरिपूर्विणाम् ।। 28।।

वर्णदेवताध्यानमाह - तादृग्रूपश्च इति । उद्यद्भास्वत्समरूपा इत्यर्थः । प्रदीपवर्णा इति चाहुः । तत्तद्युक्ता इति । पञ्चाशन्मूर्तिमध्ये टङ्की दण्डी धन्वी चेति तिस्रः वामभागे अभयमुद्रास्थाने टङ्केन दण्डेन धनुषा युक्ता इत्यर्थः।। 21 ।।

वासुदेवादिका इति । वासुदेवः शुक्लः सङ्कर्षणो रक्तः प्रद्युम्नः पीतः अनिरुद्धो नीलः। एतैर्वर्णैः उज्वलाः । प्रथमो वासुदेवः चक्र-शङ्खगदापद्मयुतः । अपरः सङ्कर्षणः सचक्रशङ्खः हली मुसलवांश्च। तृतीयः प्रद्युम्नः सशङ्खचक्रः धनुर्बाणवांश्च । तुर्यः अनिरुद्धः चक्रशङ्खासिचर्मवान् ।। 22, 23 ।।

गायत्र्यक्षरमूर्तिध्यानमाह - केशव इत्यादिना । केशवाद्याः षट् दक्षोच्चकरशङ्खयुक्ताः । विष्ण्वाद्याः षट् वामोच्चकरशङ्खिनः । गोविन्दाद्याः षट् वामाधःकरशङ्खिनः । वामनाद्यः षट् दक्षाधः करशङ्खिनः । अनेन शङ्खमात्रधारिण एकभुजाश्चतुर्भुजोऽप्यन्येषु निरायुधा इति भात्यत आह - शङ्खेति । शङ्खस्यादौ पृथङ्निर्देशः पूर्वोक्तहस्तेष्वेव शङ्खनियम अन्येषां ततः परतो ज्ञेयः ।।24-27।।

तेषां च क्रमः क इत्यत आह - क्रमेति । ननु षण्णां परस्परं भेदेऽपि तेष्वपि कथं अवान्तरभेद इत्यत आह - क्रमेति । पद्मादि-गदादिव्युत्क्रम इति पद्मादित्वेन व्युत्क्रम इत्यर्थः । अर्धक्रमः, अर्धं पूर्वद्वयस्य क्रमः । अर्धं व्युत्क्रमः । उत्तरद्वयस्य व्युत्क्रम इति यावत् । चक्रं पूर्वेषु अर्ध इत्यस्य वक्तुमशक्यत्वात् शङ्खेन सह तदुक्तिरिति ज्ञेयम् । एवं सान्तर इत्यत्रापि भावप्रधानो निर्देशः । अन्तरत्वविशिष्टः

सान्तरः । बुद्ध्या विविक्तेनात्र अनुवृत्तस्य क्रमपदविशेषणमेतत् । एवं च मध्ये क्रमः आद्यन्तयोर्व्युत्क्रम इत्युक्तं भवति । शङ्खस्य उक्त-स्थान एव नियतत्वात् अरिपूर्विणां इत्युक्तम् । तथा च शङ्खचक्रगदा-पद्मानीति क्रमः । शङ्खपद्मचक्रगदा इति पद्मादिव्युत्क्रमः । शङ्ख-गदाचक्रपद्मानीति गदादिव्युत्क्रमः । शङ्खचक्रपद्मगदा इति अर्धः । शङ्खगदापद्मचक्राणीति सान्तरः क्रम इति विवेकः ।। 28 ।।

ननु वर्णानां देवतानां व्याप्तत्वात् नित्यत्वाच्च **'वर्णास्तारार्णभेदिताः'** **'तद्रूपभेदाः पञ्चाशद्'** इत्यादि क्रमोक्तिरयुक्तेत्याशङ्क्य सिंहा-वलोकनन्यायेन परिहारमाह - **वर्णानाम्** इति ।

**तं. स.- वर्णानां देवतानां च नित्यत्वान्न क्रमः स्वतः ।**
**व्यक्तिक्रमं ब्रह्मबुद्धावपेक्ष्य क्रम उच्यते ।। 29।।**

यद्यपि इति शेषः । नित्यत्वादित्युपलक्षणम् । व्याप्तत्वात् चेत्यपि द्रष्टव्यम् । तदुक्तं विष्णुतत्त्वनिर्णयटीकायाम् - **'वर्णास्तावन्नित्यत्वात् सर्वगतत्वात् च स्वतः क्रमशून्या'** इति । स्वतः क्रमो नेति कालिको दैशिको वा क्रमो नेत्यर्थः । नित्यत्वादिति हेतुकथनात् ।

**(वर्णानां देवतानाम् इति उक्तिस्वारस्यकथनम्)**

ननु तद्रूपभेदा इति वाक्यानन्तरं वर्णास्तारार्णभेदिता इति वाक्यम् । अतः तदनुसारेण प्रधानत्वाच्च देवतानां वर्णानां चेति वक्तव्ये वर्णानां देवतानाम् इति कथमिति चेत् । सत्यम् । तथापि वर्णानां क्रमो वक्ष्यमाणरीत्या घटते । तस्य भेदव्याप्तत्वात् । भेदस्येश्वरस्वरूपेषु असम्भवात् । तथा च वक्ष्यति । अतोऽचिन्त्यैश्वर्यघटितविशेषकृत एव क्रमो न वर्णक्रम-वद् इति ज्ञापनाय प्रथमं वक्तव्यमपि देवतानां इत्येतत् पदं पश्चा-दुक्तम् । व्यक्तिक्रमम् इत्यतः पूर्वं तथापि इति शेषः। शक्तिरूपतया स्थितानां भगवद्रूपाणाम् ऐश्वर्यकृतं व्यक्तिक्रमं वापेक्ष्य क्रम उच्यते। वर्णानां ब्रह्मबुद्धौ स्थितं क्रममपेक्ष्य क्रम उच्यते ।। 29 ।।


।।

एतेषां मन्त्राणां क्रमेण न्यासमाह - **समासेत्यादिना** ।

**तं. स.- समासव्यासयोगेन व्याहृतीनां चतुष्टयम् ।**
**सत्यं चाङ्गानि तारस्य प्रोच्यन्तेऽष्टाक्षरस्य च ।।30**
**कृद्धमहावीरद्युसहस्रसहितोल्कका: ।**
**चतुर्थ्यन्ता हृदादीनि पृथग्रूपाणि तानि च ।।31।।**
**विष्णोरेवात्यभेदेऽपि तदैश्वर्यात्तदन्यवत् ।**
**चक्रशङ्खवराभीतिहस्तान्येतानि सर्वशः ।। 32 ।।**
**मूलरूपसवर्णानि कृष्णवर्णा शिखोच्यते ।**
**चतुर्विंशन्मूर्तयश्च मूलरूपसवर्णकाः ।। 33 ।।**

समासः सामस्त्यं व्यासो विस्तारः । पार्थक्यमिति यावत् । अङ्गानि प्रोच्यन्त इति । अत्र यद् वक्तव्यं तदुक्तं योगदीपिकायाम् (2.66-69) ।

**अङ्गन्यासेऽङ्गमन्त्रेभ्यः परमाङ्गानि निर्दिशेत् ।**
**हृदयं शिरोऽपि तु शिखा कवचास्त्राणि तानि च ।**
**सोद्देशानि नमःस्वाहा वषट्हुंफट्पराणि च ।**
**षडङ्गानां च नेत्राभ्यां वषडित्यस्त्रतः पुरः ।**
**न्यासस्थानानि विज्ञेयान्यङ्गानां हृदयादिभिः ।**
**कवचं व्यापकं देहे त्वस्त्रं स्यात्तालपूर्वकम् ।।** इति ।

अष्टाक्षरस्य च इति प्रोच्यन्ते इत्यस्यानुकर्षणार्थश्चकारः ।।

क्रुद्ध महावीरद्युसहस्रशब्दैः सहिताश्च ते उल्कशब्दाश्च ते तथोक्ताः । चतुर्थ्यन्ताः एते कृद्धादयः शब्दाः हृदादीनि हृदादिशब्दवाच्यानि यानि भगवद्रूपाणि तत् प्रतिपादकत्वात् हृदादीनि हृदादिशब्दवाच्यभगवद्रूपपञ्चकप्रतिपादका इति यावत् । अत्र प्रतिपाद्यप्रतिपादकयोः ऐक्योक्तिः **'अयं वै लोकः प्रथमा महानाम्नी'** इत्यादाविव

द्रष्टव्यः । चतुर्थ्यन्तैः एतैः मन्त्रैः न्यासः कर्तव्य इति भावः । अत्र अङ्गन्यासमन्त्रस्य चतुर्थ्यन्ततताकथनेन 'स्वनाम्ना च भूधरेणे'त्यादौ सर्वत्र चतुर्थ्यन्तत्वं ध्येयम् । छन्दोभङ्गसमाधानं पूर्ववत् । ननु भगवद्रूपेषु सर्वथा भेदाभावात् कथं पृथग्रूपाणीत्युक्तमित्यत आह - **अभेदेऽपि** इति । मूलरूपेत्यस्य अपवादमाह - **कृष्ण इति** । वीरोल्कमूर्तिः शिखाशब्दवाच्या । शिखायां स्थितत्वात् ।। 30 - 33 ।।

**तं. स.- आदिवर्णत्रयं नाभिहृच्छिरस्सु यथाक्रमम् ।**
**न्यासनीयं च तद्वर्णदेवताध्यानपूर्वकम् ।। 34 ।।**
**पञ्चानुनाभिहृदयवाङ्नासानेत्रकेषु च ।**
**अष्टाक्षराणां न्यासः स्याद् व्याहृतीनां प्रजापतिः ।।35**
**मुनिश्छन्दस्तु गायत्री देवता भगवान् हरिः ।**
**उद्यदादित्यवर्णश्च ज्ञानमुद्राभयोद्यतः ।। 36 ।।**
**तारेण व्याहृतीभिश्च ज्ञेयान्यङ्गानि पञ्च च ।**
**नाभिहृत्केषु सर्वेषु चतस्रो व्याहृतीर्न्यसेत् ।। 37।।**
**द्वादशार्णस्य जगतीच्छन्दोऽन्यत्तारवत्स्मृतम् ।**
**अच्छवर्णोऽभयवरकरो ध्येयोऽमितिद्युतिः ।। 38 ।।**
**पदैर्व्यस्तैः समस्तैश्च ज्ञेयान्यङ्गानि पञ्च च ।**
**अष्टाक्षराणां स्थानेषु बाह्वोरूर्वोश्च विन्यसेत् ।। 39।।**
**विश्वामित्रस्तु सन्ध्यार्थे तदन्यत्र प्रजापतिः ।**
**मुनिर्देवस्तु सवितृनामा स्त्रष्टृत्वतो हरिः ।। 40 ।।**
**प्रोद्यदादित्यवर्णश्च सूर्यमण्डलमध्यगः ।**
**चक्रशङ्खधरोऽङ्कस्थदोर्द्वयो ध्येय एव च ।। 41 ।।**
**सताराश्च व्याहृतयो गायत्र्यङ्गानि पञ्च च ।**
**दोःपत्सन्धिषु साग्रेषु नाभिहृन्मुखकेषु च ।। 42 ।।**

वर्णान्यासश्च कर्तव्यस्तारवन्निखिलं स्मृतम् ।
पञ्चाशदक्षराणां च पुंसूक्तस्यापि सर्वशः ।
अनुष्टुभश्च त्रिष्टुप् च च्छन्दोऽस्य त्रिष्टुभोऽपि वा ।।43

प्रणवस्य वर्णन्यासमाह - आदिवर्णेति । अकारउकारमकारा इत्यर्थः । यत्यपेक्षया पञ्चान्वादिक्रम उक्तः । एतेषु व्युत्क्रमो हि यथास्थितक्रमो गृहस्थादिभिः अनुसर्तव्य इति ज्ञेयम् । **अन्यत्तारवद् इति** । ऋषिर्देवता चेत्यन्यदित्यर्थः । विन्यसेद् द्वादशाक्षरवर्णानि इति शेषः । गायत्र्या ऋष्याद्या आह - **विश्वामित्र** इत्यादिना । अङ्कस्थदोर्द्वयः अङ्के स्थितोत्तानपाणिद्वयः । प्रणवोक्तऋषिदेवताङ्गन्यासादिकं मातृकामन्त्रस्य पुरुषसूक्तस्य च अतिदिशति - तारवद् इति । पुरुषसूक्तस्य छन्दोविषये अपवादमाह - अनुष्टुभ् इति । अस्य पुरुषसूक्तस्य पञ्चदशर्चो अनुष्टुभ्छन्दोबद्धाः । अन्त्या त्रिष्टुप् छन्दोबद्धा । यजुःशाखापुरुषसूक्तविवक्षयोक्तं त्रिष्टुभोऽपि च इति । अन्त्यास्तिस्रो वेदाहमित्यादयः त्रिष्टुप्छन्दोबद्धा इति भावः ।। 34 - 43 ।।

मन्त्राणाम् अतिगोप्यत्वाद् उद्दिष्टमन्त्रं सङ्केतेन उपदिशति - **विष्णिवति** ।

तं. स.- विष्णुशब्दश्चतुर्थ्यन्तो हृदयेतः षडक्षरः ।
तारवत्सर्वमस्यापि श्यामो ध्येयो हरिः स्वयम् ।।44
वर्णा एव षडङ्गानि षणयोर्भेदता मता ।
पञ्चानुनाभिहृन्नासाकेषु न्यासश्च वर्णशः।। 45 ।।
एते तु सर्वमन्त्राणां मूलमन्त्रा विशेषतः।
एतज्ज्ञानात्समस्तं च ज्ञातं स्याच्छब्दगोचरम् ।
एतज्जपात्समस्तानां मन्त्राणां जापको भवेत् ।। 46।।

मन्त्रणान्ते हृदयशब्दस्य नमश्शब्दे रूढिः । तथा चैवं मन्त्रनिष्पत्तिः

विष्णवे नमः इति । ध्याने वर्ण एव विशेषोऽन्यत्तारवद् इति ज्ञेयं । भेदता भेदः । विश्लेष इति यावत् । एवमष्टमहामन्त्रानुक्त्वा तत्रादरजननाय तन्माहात्म्यकथनपूर्वकं उपसंहरति - एते तु इत्यादिना । एतज्ज्ञानादिति । एतेषां मन्त्राणामर्थज्ञानात् समस्तं शब्दगोचरं सकलशब्दविषयं अनन्तगुणपरिपूर्णं ब्रह्म ज्ञातं स्यादित्यर्थः । अप्रधानत्वेन शब्दगोचरं कर्मादिकमपि ज्ञातफलं स्यादित्यर्थः । ननु अन्येषामपि सत्त्वात् कथम् अष्टानामेवादौ कथनमित्यत आह - एतदिति । एतेषां अष्टमन्त्राणां जपात् सर्वेषां मन्त्राङ्गजापको भवेदिति वदता सन्ध्यासु एतेषां जप आवश्यक इत्युक्तं भवति ।। 44 - 46 ।।

कथं पूजा कार्येति प्रश्नं प्रतिवक्ति - पूज्य इत्यादिना ।

**तं. स.- पूज्यश्च भगवान्नित्यं चक्राब्जादिकमण्डले ।**
**हृदये वाऽचले वाऽपि जले वा केवलस्थले ।। 47 ।।**

न केवलं जप्यः किन्तु पूज्यश्चेत्यर्थः । चक्राब्जादि इत्यादिपदेन भद्रकमण्डलग्रहणम् । जले उदके अपि पदादग्नौ च अचले शालग्रामादौ वा । वा पदादचले स्थिर इत्यपि योज्यम् । केवलस्थले मण्डले ।। 47 ।।

पीठपूजां वक्तुं गुर्वादिनमस्कारमाह - अष्टाक्षरेणेति ।

**तं. स.- अष्टाक्षरेण सम्पूज्य प्रथमं देवतां पराम् ।**
**मध्ये सव्ये गुरूंश्चैव दक्षिणे सर्वदेवताः ।। 48 ।।**
**पुनः सव्ये सर्वगुरूनाग्नेयादिषु च क्रमात् ।**
**गरुडं व्यासदेवं च दुर्गां चैव सरस्वतीम् ।। 49 ।।**
**धर्मं ज्ञानं च वैराग्यमैश्वर्यं चैव कोणगान् ।**
**तदन्तः पूर्वदिक्पूर्वमधर्मादींश्च पूजयेत् ।। 50 ।।**

मध्ये वक्ष्यमाणपीठदेवतामध्य इत्यर्थः । प्रतिमामध्य इति वा । गुरून् साक्षाद् ज्ञानोपदेष्टॄन् वा श्रीमदाचार्यान् वा । सव्ये ज्ञानोपदेष्टृ-पूजनं नाम तदन्तर्गतो भगवान् अत्रास्ति इति ध्यात्वा तत् पूजनम् । गुरूनित्यादि द्वितीयान्तपदानां वक्ष्यमाणेन पूजयेदित्यनेन अन्वयः । **'सर्वगुरून् अन्येऽपि स्वात्मनो मुख्या'** इति वचनोक्तान् । रमा[1]ब्रह्मादीनां पूर्वं देवतात्वेन प्राप्तावपि इदानीं गुरुत्वोपाध्या प्राप्तिरिति ध्येयम् । एवमुत्तरत्रापि । अत्र गरुडादयः पादपीठस्थिता ज्ञातव्याः । धर्मादयः पीठपादमूर्ध्नि स्थिता ज्ञातव्याः । धर्मं धर्माभिमानिनं धर्मशब्दवाच्यम्। एवं उत्तरत्रापि। कोणगानिति आग्नेयादिक्रमेण इति शेषः । तदन्तः कोणान्तः । प्रधानदिक्ष्विति यावत् । अत्रापि केन क्रमेण इत्यत आह - **पूर्वदिगिति** । अधर्मादयः फलकासु स्थिता इति ज्ञेयाः ।

**(अष्टाक्षरेण सम्पूज्य इति श्लोकस्य वर्णकान्तरम्)**

व्याख्यान्तरम् - प्रथमं परां देवतां परमात्मानं अष्टाक्षरेण मध्ये पीठस्थापनस्थानमध्यभागे सम्पूज्य देवस्य सव्ये पीठाद् बहिः गुरून् नत्वा पुनर्दक्षिणे सर्वदेवताः विष्णुब्रह्मरुद्रान् पुनः सव्ये सर्वगुरून् सनत्कुमारादीन् पूजयेत् ।। 48 - 50 ।।

ननु निर्ऋत्यादीनां कथमधर्मादिशब्दवाच्यत्वम् इत्यत आह - अपूजिता इति ।

**तं. स.- अपूजिता अधर्मादिदातारस्ते तथाऽभिधाः ।**
**निर्ऋतिश्चैव दुर्गा च कामो रुद्रश्च देवताः ।। 51 ।।**
**यमवायुशिवेन्द्राश्च ज्ञेया धर्मादिदेवताः ।**
**परमः पुरुषो मध्ये शक्तिराधाररूपिणी ।। 52 ।।**
**कूर्मोऽनन्तश्च पृथिवी क्षीरसागर एव च ।**
**श्वेतद्वीपो मण्टपश्च दिव्यरत्नमयो महान् ।। 53 ।।**

1. ब्रह्मादीन् ।

**पद्ममेतत्त्रयं देवी रमैव बहुरूपिणी ।**
**सूर्यसोमहुताशाश्च पद्मे श्रीस्त्रिगुणात्मिका ।। 54।।**
**आत्मान्तरात्मपरमज्ञानात्मानश्च मूर्तयः ।**
**विमलोत्कर्षिणी ज्ञाना क्रिया योगा तथैव च ।।55।।**
**प्रह्वी सत्या तथेशानाऽनुग्रहा चेति शक्तयः ।**
**अष्टदिक्षु च मध्ये च स्वरूपाण्येव ता हरेः ।। 56।।**

अधर्मादिदेवता आह - **यमेति** । पादफलकयुतं ध्यानपीठं पृथङ् निधाय परमपुरुषादीन् पूजयेत् । **मध्य इति** । फलकादिमध्ये अधोभाग इत्यर्थः । परमः पुरुषः परमात्मा पूज्य इत्यनुवर्तते । तदुक्तं योगा-दीपिकायाम् (3.10-12) ।

**अग्न्यादि कोणगानां चेत् पीठापादपदस्थितान् ।**
**विपश्चिद् गरुडं व्यासं दुर्गां चैव सरस्वतीम् ।**
**धर्मं ज्ञानं च वैराग्यम् ऐश्वर्यं च ततः परम् ।**
**तन्मूर्धगानधर्मादीन् पूर्वादौ फलकाश्रयान् ।**
**मध्येऽथ आदिपरमपुरुषाधारशक्ति च ।**

इति । शक्त्यादय उपर्युपरि स्थिता बोद्धव्याः । एतत्त्रयं श्वेतद्वीपः मण्डपं पद्ममित्येतत्त्रयम् । त्रिगुणात्मिकेति सत्वादिगुणत्रयाभिमानिनी श्रीभूदुर्गाभिर्ध्येयेत्यर्थः । तत्र श्रीभूम्यौ पार्श्वयोः । दुर्गा पृष्ठभाग इत्याहुः । [1]पद्मषडस्रेषु सूर्यसोमहुताशाः पूज्याः । दीपरूपाः । आत्मादयः पद्मोपरि चतुर्दिक्ष्ववस्थिता ज्ञातव्याः । तदुक्तं पञ्चरात्रे क्रियापादे - **'आत्मानमन्तरात्मानं परमात्मानमेव च । ज्ञानात्मानं तथा पूज्य पद्मे पूर्वादिषु क्रमात्'** इति । अथ पद्माश्रयपत्रेषु मध्ये च पूज्या आह - **विमलेति** । मध्ये अनुग्रहा ।। 51 - 56 ।।

1. पद्मसहस्रेषु ।

तं. स.- ततोऽनन्तं योगपीठस्वरूपं पूजयेद्धरेः ।
तत्रावाह्य हरिं चार्घ्यं पाद्यमाचमनीयकम् ।। 57।।
मधुपर्कं पुनश्चाचां स्नानं वासो विभूषणम् ।
उपवीतासने दत्त्वा गन्धपुष्पे तथैव च ।। 58 ।।
लक्ष्मीधरे यजेत्तत्र पार्श्वयोरुभयोर्हरेः ।
हृदयादींस्तथेन्द्रादिदिक्ष्वस्त्रं कोणकेषु च ।। 59 ।।
वासुदेवादिकान् दिक्षु केशवादींस्ततः परम् ।
मत्स्यकूर्मवराहांश्च नारसिंहं च वामनम् ।। 60 ।।
भार्गवं राघवं कृष्णं बुद्धं कल्किनमेव च ।
अनन्तं विश्वरूपं च तद्बहिः पूजयेत् क्रमात् ।।61।।
अनन्तब्रह्मवाय्वीशान् वीशं चाग्रे प्रपूजयेत् ।
वारुणीं चैव गायत्रीं भारतीं गिरिजामपि ।। 62।।
कोणेषु वीन्द्रवामे च सौपर्णीं पूजयेदपि ।
इन्द्रादीन् शेषविध्यन्तान् सभार्यान् सपरिग्रहान् ।
धूपदीपौ ततो दत्त्वा नैवेद्यं मूलमन्त्रतः ।। 63 ।।

ततः तस्मिन् हरेर्योगपीठस्वरूपमनन्तरं पूजयेत् । हृदयादिनामकान् कृद्धोल्कादीन् । अस्त्रं सहस्रोल्कमेकम् । एवमाग्नेयादिकोणेषु पूजयेदिति वक्ष्यमाणेनान्वयः । केशवादीन् इति केशवादिदामोदरान्ताः । द्वौ द्वौ दिक्षु एकैकं कोणेषु च पूजयेत् । तदुक्तम् - **'द्वन्द्वशो दिक्षु सम्पूज्यमेकैकं कोणगेषु च'** इति । एवमुपर्यपि । सङ्कर्षणादिकृष्णान्तानपि पूजयेत् सामान्यत आदिशब्दप्रयोगादित्याहुः । **अनन्तब्रह्मेति** । दिक्ष्विति शेषः । **शेषविध्यन्तान् इति** । अधोभाग इति शेषः । ऊर्ध्वं चतुर्मुखः । उक्तं च योगदीपिकायाम् - **'अध ऊर्ध्वम् अहिर्विधिः'** इति । यद्वा इन्द्रेशानयोर्मध्ये चतुर्मुखः । वरुणनिर्ऋत्योर्मध्ये शेषः । मूलमन्त्रेण नैवेद्यं प्रोक्ष्य तत्स्पृष्ट्वा मूलं जप्त्वा मूलेन सकृदा-

राध्य नैवेद्यं समर्पयेत् । तदेतदभिप्रेत्योक्तम् नैवेद्यं मूलमन्त्रत इति । तदपि उक्तं [1]'प्रोक्ष्य तीर्थेन मूलतः' इति ।। 57 - 63 ।।

तं. स.- अनेन क्रमयोगेन जुहुयात् संस्कृतेऽनले ।
पुष्पाञ्जलिश्च होमश्च मूलेनाष्टोत्तरं शतम् ।।64
सकृत्सकृत्पुष्पमन्यैर्होमस्तस्य चतुर्गुणः ।
विसर्जयित्वा नैवेद्यं मूलेन त्रिः समर्च्य च ।
धूपदीपौ पुनर्दत्त्वा पुनर्मूलेन पूर्ववत् ।। 65 ।।
अर्चयित्वा हरिं ध्यात्वा जपेदष्टोत्तरं शतम् ।
पुनर्ध्यायिद्धरिं सर्वदेवदेवेश्वरं प्रभुम् ।। 66 ।।
जपध्यानहुतार्चादीनेवं यः कुरुते सदा ।
धर्मार्थकाममोक्षाणां भाजनं स्यात् स एव हि ।।67।।
सर्वोत्तमं हरिं ज्ञात्वा य एवं भक्तिपूर्वकम् ।
जपध्यानादिभिर्नित्यं पूजयेन्नास्य दुर्लभम् ।। 68।।
भक्तिं कृत्वाऽन्यदेवेषु ब्रह्मरुद्रादिकेष्वपि ।
सर्वोत्कर्षमविज्ञाय विष्णोर्याति तमो ध्रुवम् ।। 69।।
न यज्ञा न च तीर्थानि नोपवासव्रतानि च ।
दैवतानि च सर्वाणि त्रातुं तं शक्नुयुः क्वचित् ।।70

पूजाङ्गहोममाह - अनेन इति । पीठावरणपूजासहितार्घ्यपाद्यादि-क्रमलक्षणोपायेन पूजिते आवाहनादिषोडशक्रियार्पितसंस्कृते अनले जुहु-यात् इत्यर्थः । अन्यैः होम इति । पीठावरदेवतामन्त्रैः होमः कर्तव्य इत्यर्थः । 'पीठ देवेभ्योऽप्यथ मूलत उक्तावरणदेवेभ्योऽपि' (1.3.48) इति योगदीपिकायाम् । एकादशस्कन्धे च अयमर्थः स्पष्टः । मूलमन्त्रा-तिरिक्तव्याहृत्यादिमन्त्रैः इति वा । त्रिः समर्च्येति त्रिशः कुसुमा-

---

1. प्राज्ञतीर्थेमूलतः ।

ञ्जलीन् इति भावः । भाजनं पात्रम्। योग्य इति यावत् । भक्त्या सर्वोत्तमत्त्वज्ञानपूर्वकमेव अनुष्ठितं महाफलसाधनं भवति इत्याशयेन उक्तं विवृणोति - **सर्वोत्तमम् इति** । भगवत् सर्वोत्तमत्वज्ञानस्यावश्यकत्वं तदभावेऽनर्थं वदन्नपि समर्थयति - **भक्तिं कृत्वेति** । तं विष्णूत्कर्षाज्ञानिनम् ।। 64-70 ।।

ननु ब्रह्मादिपरित्यागेन भगवत एव सर्वोत्तमत्वादिकं कुत इत्याशङ्कां परिहरन् उपसंहरति - **हरिर्हि इति** ।

**तं. स.- हरिर्हि सर्वदेवानां परमः पूर्णशक्तिमान् ।**
**स्वतन्त्रोऽन्ये तद्वशा हि सर्वेऽतः स जगद्गुरुः ।।71।।**
**ब्रह्मादयश्च तद्भक्त्या भागिनो भोगमोक्षयोः ।**
**तस्माज्ज्ञेयश्च पूज्यश्च वन्द्यो ध्येयः सदा हरिः ।।72**

**।। श्रीमदानन्दतीर्थभगवत्पादाचार्यप्रणीते तन्त्रसारसङ्ग्रहे प्रथमोऽध्यायः समाप्तः ।।**

हि शब्दो हेतौ हरिरेव ब्रह्मादिसर्वदेवानां परमः । कुतः, पूर्णशक्तिमान् । ब्रह्माद्यपेक्षयात्यतिशयितपूर्णशक्तिमत्वादिति हेतु गर्भविशेषणम् । तत्राप्युपपत्तिः - **स्वतन्त्र इति** । ब्रह्मादीनामपि स्वतन्त्रत्वे तेषामपि उक्तहेतुना उत्तमत्वं सेत्स्यति इति । अत अन्ये सर्वे ब्रह्मादयः तद्वशा इत्युक्तम् । किञ्च हि यतः स्वतन्त्रो हरिः यतश्च ब्रह्मादयस्तद्वशाः अतः स जगद्गुरुः । एवं ब्रह्मादीनां मोक्षः सांसारिकभोगश्च भगवदधीन इत्याह - **ब्रह्मादय इति** । हि यस्मादेतत् सर्वं तस्माद् ज्ञेयश्च इत्यर्थः ।। 71, 72 ।।

**।। इति श्रीमत्तन्त्रसारसङ्ग्रहटीकायां विठ्ठलाचार्यतनूजेन श्रीनिवासाचार्येण विरचितायां गूढार्थसङ्ग्रहव्याख्यायां प्रथमोध्यायः ।।**

**।। श्रीकृष्णार्पणमस्तु ।।**

# ।। द्वितीयोऽध्यायः ।।

पूर्वाध्यायोक्त जपहोमाद्युपयुक्तं इतिकर्तव्यताविशेषमाह अस्मिन् अध्याये । प्रथमतो मातृकान्यासमाह - **यस्य इत्यादिना** ।

**तं. स.- यस्य कस्यापि मन्त्रस्य न्यासः पञ्चाशदक्षरैः ।**
**वीर्यदः केऽभितोवक्त्रमक्षिकर्णेषु नासयोः ।। 1 ।।**
**गण्डयोरोष्ठयोर्दन्तपङ्क्त्योर्मूर्धनि वाचि च ।**
**दोःपत्सन्धिषु साग्रेषु पार्श्वयोः पृष्ठगुह्ययोः ।।2।।**
**तुन्दे च हृदि धातूनां सप्तके प्राणजीवयोः ।**
**सक्षकारान् न्यसेद्वर्णान् नृसिंहः क्षस्य देवता ।।3।।**

के शिरसि । अभितोवक्त्रमित्यव्ययम् । वक्त्रेऽभितः सर्वत्रेत्यर्थः । **धातूनाम् इति** । त्वक्चर्ममांसरुधिरमेदोमज्जास्थिनामकानाम् इत्यर्थः । ननु स्थानान्येकपञ्चाशत्, मन्त्राश्च पञ्चाशदतो न्यासः - कथं कार्य इत्यत आह - **सक्षकारानिति** । तद्देवतामाह - **नृसिंह इति** ।। 1 - 3 ।।

वर्णक्रमेषु क्षकारस्य कुत्र समावेश इत्यत आह - **जप इति** ।

**तं. स.- जपे न्यासे च विहितः क्षोऽक्षराणां सदाऽन्ततः ।**
**प्राणायामो रेचयित्वा पूरयित्वा च कुम्भके ।।4।।**
**तारैस्त्रिर्द्वादशावृत्तैर्व्येकद्वादशकेन वा ।**
**तत्तन्मन्त्रेण वा कार्यो गायत्र्या दशतारकैः ।।5।।**
**आदावेव जपे कुर्याच्छोषणं दहनं प्लुतिम् ।**
**वाय्वग्निवारुणैर्बीजैर्ध्यात्वा तन्मण्डले हरिम् ।।6।।**

**प्राणायाम इति** । कुम्भके नासापुटद्वयं वद्ध्वाऽवस्थाय **'प्राणायामः'**

श्वासनिरोधः कार्य इत्यर्थः । एतच्च सविस्तरं चतुर्थे वक्ष्यते । **त्रिर्द्वादशावृत्तैरिति** । त्रिगुणितद्वादशवारं आवृत्तैः । षड्त्रिंशद्वारम् आवृत्तैरिति यावत् । **द्व्येकद्वादशकेन वेति** । द्विगुणितद्वादशकेन वेत्त्यर्थः। दशतारकैः इति गायत्र्या यावत् । ॐ भूः इति आरभ्य भूर्भुवस्वरोमिति पर्यन्तं दशतारकैः युक्तगायत्र्या इत्यर्थः । **शोषणम् इति** । पापपुरुषस्य शोषणं दहनं स्वदेहे ध्येयम् । **वाग्विति** । यं रं वं इत्येतानि क्रमेण वाय्वग्निवरुणबीजानि तैः ।। 4 - 6 ।।

कलशपूजामाह - एक इति ।

**तं. स.- एकपञ्चाशद्वर्णानां चतुर्विंशतिमूर्तयः ।**
**आत्माद्या वासुदेवाद्या विश्वाद्या मत्स्यकच्छपौ ।।7।।**
**कोलो नृसिंहः सवटुर्जामदग्न्यरघूद्वहौ ।**
**वासिष्ठयादवौ कृष्णावात्रेयो बुद्धकल्किनौ ।। 8 ।।**
**शिंशुमारश्चेति शतं कलाः कलशनामकाः ।**
**एताभिः सहितां मूलमूर्तिं कुम्भोदके सुधीः ।। 9।।**
**पूर्वोक्तविधिनाऽभ्यर्च्य प्रतिमां शिष्यमेव वा ।**
**स्नापयेत् पूर्वमर्चायां जपोऽनूनः सहस्रतः ।। 10।।**
**मूलमन्त्रस्य चाङ्गानां न्यासः स्नानादनन्तरम् ।**
**प्रतिमायां सन्निधिकृच्छिष्ये माहात्म्यकृद्भवेत् ।। 11।।**

प्रतिपाद्याजादिमूर्तय इति शेषः । कलाः अंशाः भगवत इति शेषः । पूर्वमित्यतः पूर्वं स्नानादिति शेषः । आर्चायां प्रतिमायाम् ।। 7 - 11 ।।

**तं. स.- कलशः कीर्तिमायुष्यं प्रज्ञां मेधां श्रियं भगम् ।**
**योग्यतां पापहानिं च पुण्यवृद्धिं च साधयेत् ।।12।।**

उपसर्गेषु जातेषु दैवभूतात्महेतुषु ।
आयुषे वाऽथ शान्त्यै वा श्रिये वा पुण्यवृद्धये ।।13।।
योग्यतायै मन्त्रसिद्ध्यै विष्णोः प्रीत्यर्थमेव वा ।
जुहुयात् सहस्रमयुतं लक्षं कोटिमथापि वा ।
पूर्ववत् संस्कृते वह्नौ ध्यात्वा देवं जनार्दनम् ।। 14।।

कलश इति । कलशाभिषेकः । भगमैश्वर्यादिषट्कम् । योग्यतां योग्यताव्यक्तिम् । उपसर्गेषु उपद्रवेषु सत्सु । तत् परिहाराय इति शेषः । दैवभूतात्महेतुषु । आधिदैविक आधिभौतिक अध्यात्महेतुषु । दुःस्वप्नप्रयुक्तप्राप्स्यमानपीडाशान्त्यै । संस्कृते पीठपूजादिसंस्कृते वह्नौ । देवं ध्यात्वा सहस्रादि जुहुयादित्यर्थः ।। 12 - 14।।

कुण्डलक्षणपूर्वकं वह्निस्थापनमाह - कृत्वेति ।

तं. स.- कृत्वा त्रिमेखलं कुण्डं चतुर्विंशाङ्गुलोच्छ्रितम् ।
तावत्खातं चतुष्कोणमुच्छ्रितं द्वादशैव वा ।। 15 ।।

ध्यात्वेत्यस्य निक्षिपेद् इत्यनेन अन्वयः । तत्र कुण्डलक्षणम् उच्यते - त्रिमेखलमिति । त्रिमेखलमित्युपलक्षणम् । एकद्वित्रि पञ्चमेखला अपि ज्ञेयाः । चतुर्विंशाङ्गुलोच्छ्रितम् । भूमेरूर्ध्वं चतुर्विंशत्यङ्गुलोच्चम् । तावत्खातं भूमेरधस्तात् चतुर्विंशत्यङ्गुलं खातम्। पञ्चमेखलापक्षे इदमुच्छेधकथनं वा । चतुष्कोणं चतुरस्रं समेखलाखातपक्षं चाह - उच्छ्रितम् इति । द्वादशैवोच्छ्रितम् । एवं द्वादशखातं चतुर्विंशाङ्गुलम् वा इति । हस्तमात्रकुण्डकथनं सहस्रहोमस्य प्रथममुक्तत्वाद् । अन्यत्र तु अन्यत् परिमाणं ज्ञेयम् । यद्वैकसहस्रमितं कुण्डं सहस्रायुतलक्षकोटिहोमेषु चिरदाहिस्थूलद्रव्यघृतपुष्पादिभिरिति द्रष्टव्यम् ।। 15 ।।

**तं. स.- द्व्यङ्गुलं त्र्यङ्गुलं वाऽपि चतुरङ्गुलमेव वा ।**
**विस्तारो मेखलानां स्यादन्त्या वा चतुरङ्गुला ।**
**चतुर्विंशाङ्गुला वा तद्विस्तारो द्वादशैव वा ।। 16।।**

मेखलाविस्तारपरिमाणमाह - **द्व्यङ्गुलम् इति** । सर्वासां द्व्यङ्गुलं त्र्यङ्गुलं चतुरङ्गुलं वा विस्तार इत्युत्सर्गत उक्तम् । तत्र अपवादमाह - **अन्त्येति** । वा शब्द एवार्थः। यद्वा आद्याया द्व्यङ्गुलं विस्तारः । द्वितीयायाः त्र्यङ्गुलम् । अन्त्यायाः चतुरङ्गुलम् इति द्रष्टव्यम् । आद्यद्वितीययोः द्व्यङ्गुलादि नियमातिक्रमेण अन्त्यायाः चतुरत्व-मङ्गुलत्वमावश्यकमित्याह - **अन्त्या इति** । **तद्विस्तारः इति** । द्वादशाङ्गुलोच्छ्र्यपक्षे कुण्डविस्तारमाह - **द्वादशैव वेति** ।। 16।।

आहुतिप्रक्षेपणप्रदेशे कर्तव्ययोनिलक्षणमाह - **अश्वत्थ इति** ।

**तं. स.- अश्वत्थपत्राकृतिः स्यान्मूलतो द्वादशाङ्गुला ।**
**योनिः खाते च विनता प्रविष्टा द्व्यङ्गुलं तथा ।।17**
**तदात्मनि हरिं ध्यात्वा कुण्डे देवीं श्रियं तथा ।**
**विष्णुवीर्यात्मकं वह्निं निक्षिपेत् प्रणवेन तु।। 18।।**
**कुर्यात् क्रियाः षोडश च व्याहृतीभिः पृथक् पृथक्।**
**वह्नेस्तद्गृहरेः प्रीतिं कुर्वन् द्रव्यैर्यजेत्ततः ।। 19 ।।**
**आज्येन वा पायसेन समिद्भिः क्षीरिणामथ ।**
**तिलैर्वा तण्डुलैर्वाविपि मधुरैस्त्रिभिरेव वा ।। 20।।**

योनिः मूलतः स्वमूलं नालमारभ्य द्वादशाङ्गुलदैर्घ्येण युता इत्यर्थः। तदात्मनि तादृग्लक्षणस्वरूपोपेते कुण्ड इत्यर्थः । यद्वा स्वात्मनि हरिं ध्यात्वा कुण्डे श्रियं देवीं ध्यात्वेत्यर्थः । **क्रियाः षोडश चेति** । गर्भा-धान, पुंसवन, सीमन्त, वैष्णवबलि, जातकर्म, नामकरण, निष्क्रमण,

अन्नप्राशन, चौलोपनयन, महानाम्नी, महाव्रत, उपनिषत्, स्नातक, गौदानिक, समावर्तन, विवाहरूपान् षोडशसंस्कारानित्यर्थः । क्षीरिणाम् इति । पलाशौदुम्बरादि क्षीरिणाम् इत्यर्थः । मधुरैः त्रिभिरिति । क्षीरघृतमधुभिरित्यर्थः ।। 17 - 20 ।।

तं. स.- ब्रह्मवृक्षसमिद्भिर्वा समिद्भिर्वाऽमृतोद्भवैः ।
अमृताः समिधो ज्ञेयाः सर्वत्र चतुरङ्गुलाः ।। 21।।
एवमेव च दीक्षायामाज्येनैवाहुतिक्रिया ।
पूजा च कार्या विधिवत् पूर्वं सर्वहुतेष्वपि ।। 22 ।।
गुरवे दक्षिणां दद्याल्लक्षे लक्षे शतं सुधीः ।
आत्मनैव कृते होमे शक्तितो गुरुदक्षिणाम् ।। 23।।

।। श्रीमदानन्दतीर्थभगवत्पादाचार्यप्रणीते तन्त्रसारसङ्ग्रहे
द्वितीयोऽध्यायः समाप्तः ।।

ब्रह्मवृक्षेति । अश्वत्थसमिद्भिरित्यर्थः । क्षीरिवृक्षत्वेऽप्यस्य प्राधान्यात् प्रथक् ग्रहणम् । अन्यसमित्सु प्रादेशादिपरिमाणस्य स्मृत्युक्तस्य सम्मतत्वाद् अमृतासु परिमाणविशेषमाह - अमृता इति । दीक्षायां वैष्णवदीक्षायाम् । पूर्वं होमात् पूर्वम् । एतत् प्रकारश्च योगदीपिकायां स्पष्टः ।

।। इति श्रीमत्तन्त्रसारसङ्ग्रहगूढार्थसङ्ग्रहटीकायां
विट्ठलाचार्यतनूजेन श्रीनिवासाचार्येण विरचितायां
द्वितीयोऽध्यायः ।।

।। श्री कृष्णार्पणमस्तु ।।

# ।। तृतीयोऽध्यायः ।।

मन्दैः प्रतिमायामेव भगवत्पूजायाः कर्तव्यत्वेन तल्लक्षणं, देवालयनिर्माणप्रकारं, प्रतिमाविधिं, **'अशुचित्वं यदा भूयात् पुनः संप्रोक्षणं भवेत्'** इति हारीतस्मृत्युक्तेः सम्प्रोक्षणविधिं चाहास्मिन्नध्याये । प्रथमतः प्रतिमालक्षणमाह - प्रतिष्ठाम् इत्यादिना ।

**तं. स.- प्रतिष्ठां कारयन् विष्णोः कुर्यात् सुप्रतिमां बुधः ।**
**लोहैर्वा शिलया दार्वा मृदा वाऽपि यथाक्रमम् ।।1।।**

विष्णोः प्रतिष्ठां प्राज्ञैः कारयन् सु(प्र)तिमां कुर्यात् । कारयेत् इत्यन्तर्णीतणिच् । निपुणश्चेत् स्वयमेव कुर्यादिति वा । अत एव बुध इत्युक्तम् । लोहैर्वा इत्यादिक्रमं प्राशस्त्य(क्रम)मपेक्ष्य । पूर्वपूर्वालाभे उत्तरोत्तग्रहणमित्यनेकपक्षोक्तिः ।। 1 ।।

**तं. स.- षण्णवत्याङ्गुलां योग आसीनामथवा स्थिताम् ।**
**शयानां वा मुमुक्षूणां व्याचक्षाणां निजां स्थितिम् ।। 2 ।।**
**मुखादूर्ध्वं द्व्यङ्गुलोच्चां नवाङ्गुललसन्मुखाम् ।**
**सुवृत्तत्र्यङ्गुलग्रीवामास्तनाच्च षडङ्गुलाम् ।। 3 ।।**

षण्णवत्यङ्गुलाम् इति । द्वितीयान्तस्य सर्वस्यापि प्रतिमामित्येतद्विशेषणत्वं च ध्येयम् । मुमुक्षूणां निजां स्थितिं व्याचक्षाणामिति सम्बन्धः । मोक्षेच्छुभिः तत्साधनज्ञानार्थं व्याख्यानमुद्रायुतप्रतिमाकार्या इत्यर्थः । आस्तनात् स्तनपर्यन्तम्। एवमग्रेऽपि ।। 2, 3 ।।

**तं. स.- पञ्चादशाङ्गुलां नाभेरासार्धदशकाङ्गुलाम् ।**
**वृषणादासूलतश्च सार्धद्व्यङ्गुलमायताम् ।। 4 ।।**
**तावदागुदतो दीर्घां चैत्यादष्टादशाङ्गुलाम् ।**

**तथा द्व्यङ्गुलचैत्यां च द्वाविंशज्जङ्घया युताम् ।।5।।**
**आरभ्य गुल्फमध्यं च सहार्धचतुरङ्गुलाम् ।**
**षडङ्गुलोच्चप्रपदां सार्धत्र्यङ्गुलमेव च ।। 6 ।।**

वृषणावस्थानप्रदेशपरिमाणमाह - **मूलतश्चेति** । शिश्नमूलाधोदेशमारभ्य स्वमूलाधोभागपर्यन्तं सार्धद्व्यङ्गुलायतवृषणस्थानप्रदेशयुक्तमित्यर्थः । **चैत्यशब्देन** जानुरुच्यते । **आरभ्येति** । गुल्फमारभ्य यदधोभागपर्यन्तम् अर्धाधिकचतुरङ्गुलाम् इत्यर्थः ।

**(षण्णवत्यङ्गुलाम् इत्यत्र विरोधपरिहारः)**

नन्वङ्गुलि परिगणने क्रियमाणे सप्तनवत्यङ्गुलानि भवन्ति । षण्णवत्यङ्गुलामिति कथमुक्तम् इति चेत् अत्र सम्प्रदायविदो द्वेधा समाधानमाहुः । तथा हि । **'तावदागुदतोदीर्घाम्'** इति वृषणमूलाधोभागम् आरभ्य गुदपर्यन्तं सार्धद्व्यङ्गुलपरिमाणमुक्तम् । तत्र सार्धाङ्गुलमेव गणनीयम् । वृषणमूलाधोभागापेक्षया तिर्यगेकाङ्गुलिव्यवधानेनाधोभागे गुदस्य विद्यमानत्वात् । अतस्तदेकाङ्गुलिपरित्यागे षण्णवत्यङ्गुलत्वं सेत्स्यतीत्येकं समाधानम् । अपरं तु मूलतश्च **'सार्धद्व्यङ्गुलमायताम्'** इति वृषणमूलपरिमाणकथनम् । तावदागुदतो दीर्घामिति आगुदतो दैर्घ्यकथनं प्रासङ्गिकम् । अतोऽत्र पञ्चाङ्गुलानि परित्यज्य **'चतुरङ्गुलम्'** इति वक्ष्यमाणवृषणदैर्घ्यप्रमाणेन चतुरङ्गुलेन षण्णवत्यङ्गुलत्वं सेत्स्यति। व्यवधानेन कथनं त्वतिरहस्यत्वात् इति । **षडङ्गुलोच्चप्रपदाम्** । आदिभाग इति शेषः । **सार्धत्र्यङ्गुलमिति** । मध्य इति शेषः ।। 4-5 ।।

**तं. स.- प्रपदोच्चयुतामन्ते द्व्यङ्गुलप्रपदोच्छ्रयाम् ।**
**त्र्यङ्गुलद्व्यङ्गुलामर्धहीनमध्यांङ्गुलामपि ।। 7 ।।**
**त्रिपदाङ्गुलहीनान्यां ततस्तादृशतत्पराम् ।**
**पादोनोच्चाङ्गुष्ठनखां तदर्धतदनन्तराम् ।। 8 ।।**

क्रमशः पादहीनान्यां रक्तपादनखां शुभाम् ।
विस्तारः प्रपदस्यापि षडङ्गुल उदाहृतः ।।9।।
अङ्गुष्ठपरिणाहस्तु चतुरङ्गुल ईरितः ।
त्र्यङ्गुलस्तु तदन्यस्य व्रीह्यर्धोनाः क्रमात्पराः ।।10।।
दशाङ्गुलं जङ्घमूलं मध्यं च त्र्यङ्गुलाधिकम् ।
सप्तादशाङ्गुलं तूर्ध्वं जानुरष्टादशाङ्गुलम् ।। 11 ।।
ऊर्वन्तोऽपि तथा ज्ञेयो मध्यं द्विर्द्वादशाङ्गुलम् ।
चतुरङ्गुलाधिकं मूलं गुह्यं सार्धचतुष्टयम् ।। 12।।
सार्धत्रयं परीणाहाद् वृषणं चतुरङ्गुलम् ।
सप्ताङ्गुलं परीणाहाद्वृत्तं प्रोक्तं समस्तशः ।। 13।।

अन्ते द्व्यङ्गुलोच्चप्रपदोच्छ्रयाम् इत्यर्थः । **त्र्यङ्गुलद्व्यङ्गुलाम् इति** । त्र्यङ्गुलपरिमिताङ्गुलद्वयोपेताम् इत्यर्थः । अर्धहीनमध्याङ्गुलां सार्धद्व्यङ्गुलपरिमितमध्याङ्गुलाम् इति । सर्वत्र बहुव्रीहिः । त्रिपादाङ्गुलहीनान्यां अङ्गुलित्रयपरिमाणमध्ये त्रिपादन्यूनाङ्गुलं सपादद्व्यङ्गुलपरिमितान्याङ्गुलाम् इत्यर्थः । ततः तादृशतत्परां ततश्चतुर्थीं त्रिपदाङ्गुलहीनकनिष्ठाङ्गुलां कनिष्ठाङ्गुलिः सार्धाङ्गुलेति यावत् । यद्वा तत इत्युत्तरत्र विद्यमानं पदमत्रापि सम्बध्यते । एवं च ततः सार्धद्व्यङ्गुलपरिमितमध्याङ्गुलापेक्षया त्रिपादाङ्गुलहीनान्याङ्गुलाम् इत्यर्थः । पादोनद्व्यङ्गुलपरिमितचतुर्थाङ्गुलाम् इति यावत् । ततस्तदपेक्षया तादृशतत्परां त्रिपदाङ्गुलहीनकनिष्ठाङ्गुलाम् एकाङ्गुलिपरिमितकनिष्ठाङ्गुलाम् इति यावत् । **पादोनेति** । पादोनाङ्गुलिपरिमितदैर्घ्योपेतः उच्च उन्नतः अङ्गुष्ठनखः यस्यासौ स तथोक्तस्तां तदर्धां तदनन्तरां पादपादार्धाङ्गुलपरिमिततदनन्तराङ्गुलिनखाम् इत्यर्थः । **क्रमशः पादहीनान्याम्** । पूर्वपूर्वापेक्षया क्रमशः पादाङ्गुलिपरिमाणहीनान्याङ्गुलित्रयनखो-

पेताम् इत्यर्थः । परिणीतः स्थूलता चतुरङ्गुल इति । चतुरङ्गुलपरिमितसूत्रवेष्टनयोग्य इति भावः । एवमुत्तरत्रापि। द्विर्द्वादशाङ्गुलं द्विगुणितद्वादशाङ्गुलं मूलम् । गुह्यं सार्धचतुष्टयम् इत्येतत् दैर्घ्यकथनम् । एवं वृषणम् इति ।। 7 - 13 ।।

तं. सं.- अष्टत्रिंशाङ्गुलः कट्याः परीणाह उदाहृतः ।
सुवृत्तत्वं तथा श्रोण्योः पीनत्वं च समस्तशः ।।14।।
विस्तारश्च तथा कट्याः सुप्रतिष्ठितता पदोः ।
कट्याश्चैवाङ्गुलाधिक्यं नाभेरध उदाहृतः ।। 15।।
नाभिः सार्धाङ्गुलश्चैव गम्भीरोऽर्धाङ्गुलोन्नतः।
वृत्तः प्रदक्षिणश्चैव द्विचत्वारिंशदङ्गुलम् ।। 16।।
मध्यं स्तने परीणाहः षडङ्गुलमतोऽधिकः।
एकोनविंशाङ्गुलं तदुरोविस्तारलक्षणम् ।। 17 ।।

अष्टत्रिंशेति। समस्तशः सर्वत्र पीनत्वं कट्याश्च विस्तारः विस्तृतता। नाभेरधः नाभिनिम्नपरिमाणमाह - नाभिरिति । तद्विस्तृतिपरिमाणमाह - अर्धाङ्गुलोन्नत इति । अर्धाङ्गुलपरिमितोपरिप्रदेशयुक्तविस्तार इत्यर्थः । यद्वा नाभिः नाभ्युपरिभागः सार्धाङ्गुलः । तद्गम्भीरस्तु अर्धाङ्गुलोऽत्र सार्धाङ्गुलः । अङ्गुलपरिमित इति यावत् । मध्यम् उदरमध्यम् । एकोनेति । एकोनविंशाङ्गुलं तत् परिमाणमुरोविस्तारस्य लक्षणम् ।। 14 - 17 ।।

तं. सं.- पादोनमङ्गुलञ्चैव भुजाभ्यां सह सार्धकम् ।
अंसयोर्विस्तृतिश्चैव पृथगष्टाङ्गुला मता ।। 18।।
सप्ताङ्गुलोच्छ्रयः कक्षादुपरि स्कन्धयोर्मतः ।
अष्टत्रिंशाङ्गुलं चैव हस्तयोर्मानमुच्यते ।। 19।।

अष्टादशाङ्गुलो बाह्वोः परिणाह उदाहृतः ।
क्रमादूनं तदन्ते तु सार्धाष्टाङ्गुलमीरितम् ।।20।।

न केवलम् एतावत् किन्तु पादोनमङ्गुलं चैवेति योज्यम् । भुजाभ्यां सह उरो विस्तारलक्षणं सार्धकं पूर्वोक्तपादन्यूनविंशाङ्गुलापेक्षया अर्धसहितं ज्ञेयमित्यर्थः । पादपादार्धन्यूनत्रिंशाङ्गुलमित्यर्थः। यद्वा पादोनमङ्गुलमित्येतदुत्तरत्र सम्बध्यते । उरो विस्तारलक्षणमेकोन-विंशाङ्गुलमेव भुजाभ्यां सह तु सार्धमेकोनविंशाङ्गुलम् त्रिपादन्यून-त्रिंशाङ्गुलम् इति यावत् इति । हस्तयोरिति । तलौ विना इति ज्ञेयम्। तत् परिमाणस्य वक्ष्यमाणत्वात् ।। 18-20 ।।

तं. सं.- साङ्गुलस्तु तलः सार्धनवाङ्गुल उदाहृतः ।
समं तदुभयं ज्ञेयं तथैव तलविस्तृतिः ।। 21 ।।

साङ्गुलस्तु इति । तदुभयम् अङ्गुल्यस्तलश्चेत्युभयमित्यर्थः । तलविस्तृतिश्च तथैव। तत्समैव ।। 21 ।।

तं. सं.- अर्धाङ्गुलोन्नता मध्या द्वयोः सार्धाङ्गुलोन्नता ।
कनिष्ठिकायास्तस्यास्तु व्रीहिमात्राधिकः परः ।।22।।
सार्धत्रयपरीणाहौ मध्यज्येष्ठावुदाहृतौ ।
अन्यौ व्रीहितदर्धोनावन्या सार्धद्वयाङ्गुला ।। 23।।
पादोनान्तपरीणाहाः सर्वे ज्येष्ठां विना स्मृताः ।
वक्षोविस्तारसदृशः परिणाहो गलस्य च ।। 24।।

अर्धाङ्गुलोन्नता इति । द्वयोस्तर्जन्यनामिकयोः सकाशात् मध्याङ्गुलिः अर्धाङ्गुलोन्नता । तस्याः कनिष्ठायाः अङ्गुष्ठो व्रीहि-मात्राधिकः । अयं भावः । मध्याङ्गुलोन्नतिः समं तदुभयमित्यनेन पादोनपञ्चाङ्गुला सिध्येत् । कनिष्ठायाः सपादत्र्यङ्गुलत्वं तर्जन्य-

नामिकयोः सपादचतुरङ्गुलत्वं अङ्गुष्ठस्य व्रीह्यधिकसपादत्र्यङ्गुलत्वमिति । **अन्यौ इति** । तर्जन्यनामिकाख्यावङ्गुली व्रीहितदर्धोनौ । तत्र तर्जनी व्रीहितदर्धोना, अनामिका व्रीहिन्यून इति ज्ञेयम्। यद्वा उभावपि व्रीहितदर्धोनौ सार्धव्रीहिन्यूनाविति यावत् । **द्वयाङ्गुल इति**। छान्दसो निर्देशः । त्रियम्बकम् इति यथा । **पादोनान्तपरीणाहा इति**। पादोनाङ्गुलिपरिमिततत्तदङ्गुलिप्रदेशविस्तार इत्यर्थः । यद्वा स्वस्वमध्यभागापेक्षया अङ्गुल्यादिभागे पादोनपरीणाह इत्यर्थः । पादोनान्तपरीणाह इति पाठे तु स्वस्वमध्यभागापेक्षया अन्त्यभागे पादन्यूनपरीणाहोपेता इत्यर्थः ।। 22 - 24 ।।

**तं. सं.- ललाटकुक्षिकण्ठास्तु दीर्घरेखात्रयान्विताः ।**
**वृत्तो गलो बाहवश्च स्तनावङ्गुलयस्तथा ।।25।।**
**रक्तास्तलनखाश्चैव नेत्रान्तोऽधर एव च ।**
**उत्तरोष्ठश्च जिह्वा च नखौ पादोनकाङ्गुलौ ।।26।।**
**अर्धाङ्गुलौ तथा मध्यावन्येऽष्टांशक्रमोनकाः ।**
**नासिकाया अधस्ताच्च नासिका च रराटिका ।। 27।।**
**समा मानेन नासाया उच्चत्वेनैव मापने ।**
**अर्धाङ्गुलाधिकं सर्वमुखस्य तु भविष्यति ।। 28।।**
**चतुरङ्गुलं तथैवाऽस्यं सार्धव्रीह्यधरं स्मृतम् ।**
**उत्तरं व्रीहिमात्रन्तु तदूर्ध्वं चाधरोपसम् ।। 29।।**
**सार्धाङ्गुलमथ प्रोक्तमधरादध एव च ।**
**आस्यपार्श्वद्वयं प्रोक्तमाकर्णात्तु षडङ्गुलम् ।। 30।।**

**नखाविति** । हस्तद्वयाङ्गुष्ठनखावित्यर्थः । **अर्धाङ्गुलाविति मध्यौ** हस्तद्वयगतमध्याङ्गुलिनखौ । **अन्य इति** । हस्तद्वयगततर्जन्यनामिका कनिष्ठाङ्गुलिनखाः । **अष्टांशक्रमोनकाः** । मध्यनखापेक्षया तर्जन्यना-

मिकानखानां अष्टांशोनत्त्वम् । तदपेक्षया कनिष्ठनखयोरष्टांशोनत्त्वम् इति भावः । ननु हस्तमुखौ समपरिमाणाविति अन्यत्रोक्तम् । अत्र तु नवाङ्गुलिपरिमितत्वमेव मुखस्योच्यते । अतो विरोध इत्यत आह - **नासाया इति** । नासिकोच्चत्त्वमन्तःकृत्वा सर्वमुखसमापने क्रियमाणे तत्परिमाणं पूर्वोक्तापेक्षयाऽर्धाङ्गुलाधिकं भवति । तत्रोपपत्तिर्ना- **साया उच्चत्त्वेन** इति । नासिकाया उच्चत्त्वेन निमित्तेनेत्यर्थः । तथा च मुखस्याऽपि सार्धनवाङ्गुलत्वं लब्धमिव हस्तसमपरिमाणत्वं वर्तत एवेति भावः । आस्यतिर्यक् परिमाणमाह - **चतुरङ्गुलम् इति** । नवाङ्गुल- परिमिते मुखे नासिकाया अधोभागः नासिका च ललाटिका मानेन समेत्युक्त्या नासिकाधोभागस्य त्र्यङ्गुलपरिमितत्त्वं लब्धम्। तत्रा- वान्तरपरिमाणमाह - **सार्ध इति** । अधरमधरोष्ठः, सार्धव्रीहिपरि- मितः । सार्धाङ्गुलपरिमित इति यावत् । उत्तरमुत्तरोष्ठः । तदूर्ध्वम् अधरोपमम् । अर्धाङ्गुलपरिमितमित्यर्थः । अर्धाङ्गुलमधः प्रोक्त- मित्यत्र तदूर्ध्वम् इति प्रकृतत्वाच्च तदनुसारेणोत्तरोष्ठादध इति प्रतीतिः स्यात् । अत अथेत्युक्तं स्वयमेव विवृणोति - **अधरादध एव चेति** । सार्धाङ्गुलमेव इति सम्बन्धः । ननु अत्र नासिकाधोभागस्योक्ता- वान्तरपरिमाणगणने क्रियमाणेऽर्धव्रीहिन्यूनत्र्यङ्गुलपरिमितत्वमेव लभ्यते । तत् कथं इति चेत् इत्थम् । उत्तरत्र सुस्मितमिति स्मितयुक्त- त्वस्य वक्ष्यमाणत्वात् सुस्मितत्वार्थमुत्तराधरोष्ठयोर्मध्ये अर्धव्रीहि- परिमितं विवरं कर्तव्यम् । तथा च तेन अर्धव्रीहिपरिमाणेन सह नासिकाधोभागस्य समग्रं त्र्यङ्गुलत्वं सेत्स्यत्येव इति ।

(दन्तेषु सुस्मितत्वप्रदर्शनक्रमोपपादनम्)

एतेनैतदपि निरस्तम् । उत्तरत्र 'दन्तैर्युक्तम्' इत्यनुपपन्नम् । ओष्ठादिदन्तानां दर्शनायोग्यत्वेन कर्तुमशक्यत्वादिति । सुस्मितत्वार्थं विवरणकरणे दन्तानां दर्शनसम्भवात् । अधरादध इत्येतदुत्तरत्र वा सम्बध्यते । तथा च अधरादधरं कर्णपर्यन्तं आस्यपार्श्वद्वयं षडङ्गुल- मेवेत्यर्थः । अत्राधरादधश्शब्देन आस्यान्तसमीपस्थित एवाधरोष्ठ

अधःप्रदेशो विवक्षितः ।। 25 - 30 ।।

तं. सं.- सप्ताङ्गुलं नासिकायाः पार्श्वमाकर्णतः स्मृतम् ।
सपादाङ्गुलमुच्चा च नासिका परिकीर्तिता ।।31।।
अर्धाङ्गुले पुटे तस्या मध्यं च समुदाहृतम् ।
नासिका व्रीहिविस्तारा चक्षुषी चाङ्गुलत्रये ।। 32।।
अङ्गुलं चैव विस्तीर्णे फुल्लेऽर्धं च तदन्यथा ।
चतुरङ्गुलौ भ्रुवौ चैव तथाऽर्धाङ्गुलविस्तृतौ ।। 33।।
असहंतौ च निबिडौ तथा पक्ष्म सुनीलकम् ।
कर्णौ च त्र्यङ्गुलौ सार्धद्वयविस्तारसंयुतौ ।।34।।
सकुण्डलौ तावदेव विवरं सम्प्रकीर्तितम् ।
तथा द्व्यङ्गुलविस्तारो लताभ्यां सह कथ्यते ।।35।।
कर्णपूरयुतौ कर्णावुत्पलाभ्यां च संयुतौ ।
नीलालकसहस्रेण युक्तं तन्मुखपङ्कजम् ।। 36।।
ललाटं सुविशालं च तथा सार्धनवाङ्गुलम् ।
विस्तारो मूर्ध्नि वृत्तं च शिरश्छत्राकृति स्मृतम् ।।37।।
दीर्घाश्च कुञ्चिताग्राश्च नीलाः केशा हरेर्मताः ।
मुखमानेन चैवोच्चं किरीटं केशवस्य हि ।। 38।।
कुण्डले मकराकारे वक्षश्चैव सकौस्तुभम् ।
सश्रीवत्सं दक्षिणतः पीनं तुङ्गमुदाहृतम् ।। 39।।
हारग्रैवेयसहितमुपवीतयुतं तथा ।
बाहवश्च सकेयूरकङ्कणाङ्गदमुद्रिकाः ।। 40 ।।
समध्यबन्धं मध्यं च नितम्बे पीतमम्बरम् ।
काञ्चीगुणश्च पदयोर्नूपुरे चाति सुस्वने ।। 41।।

**अङ्गुलीयानि च पदोः कृतिभिः साधु कारयेत् ।**
**सोत्तरीयं च चक्राद्यैरायुधैश्च समन्वितम् ।। 42।।**
**अनुन्नतैरविरलैर्दन्तैर्युक्तं च सुस्मितम् ।**
**समदृष्टियुतं कार्यं श्लक्ष्णं चैव मनोहरम् ।। 43।।**

मध्यं पुटयोर्मध्यम् । **नासिकाव्रीहिविस्तारेति** । अग्र इति शेषः। तदन्यथेति विकसितत्वाभावे अर्धमङ्गुल्यर्धविस्तीर्ण इत्यर्थः । **'पक्ष्म'** **अक्षिपक्ष्मसकुण्डलमिति** । कुण्डलाकारः कर्णान्तो विवरोर्ध्वभागस्थितः प्रदेशविशेषः कुण्डलमित्युच्यते । तेन सहितं विवरं तावदेव सार्धद्व्यङ्गुल-परिमितम् । **लताभ्याम् इति** । लताशब्देन कर्णमध्यस्थ[1]दीर्घाकारोन्नत-प्रदेशः उच्यते । द्विवचनं कर्णद्वयापेक्षया । कर्णपूरइत्याभरणविशेषः। **नीलेति** । **समदृष्टियुतम् इति** ।

**ऊर्ध्वदृष्टिम् अधोदृष्टिं तिर्यक्दृष्टिं च वर्जयेत् ।**
**ऊर्ध्वदृष्ट्या वित्तनाशो ह्यधोदृष्ट्या कुलक्षयः ।**
**तिर्यक् दृष्ट्या द्वयोर्नाशः तस्माद् ग्राह्या समेक्षणा ।।**

इत्याद्युक्तेरिति भावः । श्लक्ष्णम् स्निग्धमित्यर्थः ।। 31 - 43 ।।

**तं. सं.- प्रतिमार्थं व्रजन् पञ्चध्वनिभिर्मङ्गुलैर्युतः ।**
**गत्वा शुचिस्थलं चैव शिलां तत्र परीक्षयेत् ।। 44।।**

एवं प्रतिमालक्षणमुक्त्वा तन्निर्माणप्रकारमाह - **प्रतिमार्थम्** **इत्यादिना** । **पञ्चध्वनिभिरिति** । देहाहत-कराहत-नखाहत-परस्पराहत-मुखजभेदेन पञ्चविधैः ध्वनिभिः इत्यर्थः ।। 44 ।।

परीक्षाप्रकारं लेशतो दर्शयति - **ध्वनिभेदेन इति** ।

1. दीर्घाकारोनन्तप्रदेश ।

**तं. सं.- ध्वनिभेदेन विज्ञाय शिलां गर्भवतीं त्यजेत् ।**
**मूलमन्त्रं जपन् विष्णुं ध्यायंस्तिष्ठेदुपोषितः ।। 45**

**'ध्वनिश्च शिथिलो यासु स्पर्श उष्णस्तथापि वा । तासु गर्भाः स्फुटं सन्ति'** इत्यादि शिल्पशास्त्राभिज्ञः पुरुषो ध्वनिभेदेन शिलां विज्ञाय गर्भवतीं शिलां परित्यजेत् । गर्भो नाम विश्लिष्टतया अवस्थानम् । तच्चोक्तम् - **'गर्भवत्यः शिलावर्जा गर्भाश्चान्तरवस्थिताः'** इति । शिलान्तर्विद्यमाना मण्डूकादयः गर्भा इत्युच्यन्ते ।। 45 ।।

**तं. सं.- वार्क्षी चेद्यज्ञवृक्षस्य सारेणैव तु कारयेत् ।**
**बलिदानं च संक्षेपविधानेनैव कथ्यते ।। 46 ।।**
**अस्य सङ्क्षेपशास्त्रत्वान्न विस्तरविरोधिता ।**
**दत्त्वोपहारं हरये तद्भूतेभ्यो बलिं हरेत् ।। 47।।**

**यज्ञवृक्षस्येति** । यज्ञसाधनवृक्षस्य इत्यर्थः । तदुक्तम् । **'अश्वत्थ-निर्मिता पूज्या राज्यकामेन धामनि । न्यग्रोधनिर्मितं बिम्बं वंश-विस्तारकारणम् । प्लक्षजं जीवधनदम्'** इत्यादिना । बलिं नैवेद्यं हरेत् दद्यात् ।। 46, 47 ।।

**तं. सं.- प्राच्येभ्यो विष्णुभूतेभ्य इत्याद्यखिलदिक्षु च ।**
**आदाय विष्णुभूतेभ्यो लोकपेभ्यस्तथा हरेः ।। 48।।**
**अनुज्ञामुद्धरेद् वृक्षं शिलां च प्रतिमाकृते ।**
**प्रतिमां पिण्डिकां पीठं शिलाभिस्तु त्रिजातिभिः।।49**

**प्राच्येभ्य इति** । पीठस्थापनार्थं पीठाधोभागे या शिला स्थाप्यते सा पिण्डिकेत्याहुः । प्रतिमायाः साक्षादाधारभूता उलूखलाकारशिला पिण्डिकेत्यपि आहुः।

तं. सं.- स्वरस्थूलत्वभेदेन पुंस्त्र्याद्या जातितः शिलाः ।
पुंशिला प्रतिमार्थं तु स्त्रीशिला पीठक्लृप्तये ।
वेदमङ्गलघोषेण वाद्यैश्च प्रतिमां हरेत् ।। 50 ।।

स्वरस्थूलत्वेति । जातितः पुंस्त्र्याद्याः स्वरभेदेन च ज्ञेया इत्यर्थः। अत्रादिशब्देन नपुंसकशिला ग्राह्या । पुंशिलेति । अत्र नपुंसकशिला पिण्डिकार्थम् इति लक्ष्यते । हरेत् आनयेत् ।। 50 ।।

तं. सं.- प्रागुदक्प्रवणे देशे कुर्याद्देवालयं सुधीः ।। 51 ।।
समावृत्ते दक्षिणतः पश्चाद्विर्यग्र एव वा ।
मध्ये वा ग्रामपुरयोर्विशाले सुशुचौ तथा ।। 52 ।।
ऐशानीं दिशमेकां तु विनोदकविवर्जिते ।
जलाशयस्य मध्ये वा शिलावृक्षादिवर्जिते ।। 53 ।।

देवालयनिर्माणप्रकारम् आह - प्राग् इत्यादिना । उदक्प्रवणे । ईषदुत्तरसम्बद्धप्राग्देश इत्यर्थः । दक्षिणतः समावृत्ते । ईषत् दक्षिणदिक् सम्बद्धे पश्चात् पश्चिमदेश इत्यर्थः । षोडशदिग्विवक्षयैतत् । ऐशानीं दिशं विनेति वक्ष्यमाणत्वात् । यद्वा प्रागुदक्प्रवणे पूर्वभागे ईषदुत्तरदिगभिमुखे ईशान्याभिमुख इति यावत् । दक्षिणतः समावृत्तैः पश्चात् पृष्ठभागे । ईषद्दक्षिणाभिमुखे ईशान्यप्राचीनत्वेन देवालयः कार्य इति भावः । ग्रामपुरयोरिति । 'ग्रामो बहुजनाकीर्णो राजराजाश्रयं पुरम्' । उदकविवर्जिते उदकबाधारहिते । जलाशयस्य मध्ये वा इति वक्ष्यमाणत्वात् । शिलावृक्षादिवर्जित इत्यस्यापि अयमेव अर्थः ।। 51, 52, 53 ।।

तं. सं.- श्मशानादिकदेशानां विदूरे सुमनोहरे ।
किष्कुद्वादशतोऽनूनं कुर्याद्देवालयस्थलम् ।। 54 ।।

द्विगुणं चतुर्गुणं वाऽपि शतकिष्कुप्रमाणकम् ।
कृत्वा भूशोधनं सम्यक् सार्धपुंमानतस्त्वधः ।। 55।।
केशाङ्गारास्थिवल्मीकलोष्ठाश्मादिविवर्जिते ।
हरिं तत्रपि सम्पूज्य बलिं दत्त्वापि पूर्ववत् ।। 56।।
मृद्दारुशैलैर्लोहैर्वा कुर्याद्देवालयं दृढम् ।
दीर्घस्थकलमात्तिस्त्रस्तिर्यगष्टयवोदराः ।। 57 ।।
अङ्गुल्या मध्यरेखायाः समा लक्षणतः स्मृताः ।
स्वाङ्गुल्या मध्यरेखा तु प्रतिमादिषु लक्षणम् ।।58।।
ह्रस्वमध्योच्चभेदेन तत्तन्मानं समस्तशः ।
प्रादेशहस्तपुरुषमानं सामान्यलक्षणम् ।। 59 ।।
प्रतिमाध्यर्धकं द्वारमूर्ध्वमर्धं च विस्तृतिः ।
प्रतिमार्धप्रमाणेन पीठस्योच्चत्वमुच्यते ।। 60 ।।
उन्नतिः पिण्डिकायास्तु चतुरङ्गलमानतः ।
त्र्यङ्गुलं द्व्यङ्गुलं वाऽपि गृहान्तः प्रतिमासमम्।
उच्चं पर्यक् च क्रमश उच्चत्वं मध्यतः स्मृतम् ।।61।।

श्मशानादि इति । विदूरे बहुदूरे । किष्कुद्वादशत इति । किष्कुर्हस्तः । किष्कुर्हस्ते वितस्तौ चेति अमरः । लोष्ठाश्मशब्देन वर्तुलपाषाण उच्यते । ह्रस्वमध्योच्चेत्युक्तं विवृणोति - प्रादेश इति । गर्भगृहद्वारदैर्घ्यप्रमाणमाह - प्रतिमेति । द्वारदैर्घ्यं सार्धप्रतिमापरिमितं कर्तव्यम् इत्यर्थः । द्वारविस्तारपरिमाणकथनं 'अर्धं च विस्तृतिः' इति। प्रतिमार्धप्रमाणं यथा भवति तथा विस्तृतिः कार्या इत्यर्थः । त्र्यङ्गुलं व्यङ्गुलं वाऽपि पिण्डिकाया उन्नतिरिति पूर्वेण सम्बन्धः। गर्भगृहान्तः प्रतिमायाः उपरि कियत् परिमाणं विवरं कर्तव्यमित्यत आह - गृहान्तरिति । प्रतिमामानेनोच्चत्त्वं न सर्वत्र किन्तु मध्य एव।

प्रतिमाया ऊर्ध्वं परिमित उच्चत्वं क्रमश इत्याह - **पर्यक् इति** ।। 54 - 61 ।।

प्रतिमोर्ध्वभागे गृहाद् बहिः उन्नतिप्रमाणमाह - **तावदिति** ।

**तं. सं.- तावदुच्चं बहिश्चैव यद्येकशिखरं भवेत् ।**
**अर्धोच्चमथवाऽपि स्यादधस्तात्प्रतिमोन्नतम् ।।62।।**
**ततो द्विगुणमानं वा सार्धप्रतिममेव वा ।**
**शिखरान्तरे तु प्रतिमामानं तद्गल उच्यते ।।63।।**
**तत्त्रिपादं तदर्धं वा तदध्यर्धमथापि वा ।**
**वर्तुलं पद्मसदृशं हस्तिपृष्ठसमं तथा ।। 64 ।।**

यद्येकशिखराङ्गुलव्यवधानेन विना शिखरं साक्षाद्विमानसम्बद्धं भवेत् तद् बहिः प्रतिमामानेनोच्चमित्यर्थः । शिखरान्तरत्वपक्षे तु वक्षयाम इति भावः । ननु गृहान्तः प्रतिमामानेनोच्चत्वे बहिः ततोऽप्यधिकोच्चमेव भवति । विमानोपादानशिलादिपरिमाणभूतोच्चत्वस्य अधिकत्वादिति चेत् सत्यम् । तर्हि प्रतिमामानमेव विमानमवशेष्य बहिरेवाधोभागे तदन्याच्छादनस्याभिप्रेतत्वात् । अर्धोच्चम् इत्यत्रापि इदमेव समाधानम् । एकशिखरपक्ष एव बहिः उन्नतौ पक्षान्तरमाह - **अर्धोच्चम् इति** । ननु तर्हि गृहान्तः प्रतिमोर्ध्वभागे विवरमप्यर्धोच्चं किमित्यतो नेत्याशयेनाह - **अधस्तादिति** । शिखरादधस्तात् । गृहान्तः प्रतिमोर्ध्वभाग इति यावत् । प्रतिमोन्नतं नियतमिति शेषः । शिखर विवरपरिमाणे पक्षान्तरमाह - **तत इति** । प्रतिमापेक्षयेत्यर्थः । गलव्यवहितशिखरपक्षे अङ्गुलिपरिमाणमाह - **शिखरान्तरे तु इति**। गलेनान्तरे व्यवहितशिखरे क्रियमाण इत्यर्थः । आहिताग्न्यादित्वादन्तरशब्दस्य परनिपातः । अथवा शिखरव्यवधाने गलेन क्रियमाण इत्यर्थः । शिखरान्तरत्वपक्षे शिखरपरिमाणमाह - **तत्त्रिपादम् इति** । तद्गलेन प्रतिमामानमिति प्रकृता प्रतिमोच्यते । अधिकशब्दो

वाशब्दार्थः । तथा च प्रतिमापेक्षया त्रिपादपरिमितं वा अथवा तदर्धपरिमितं शिखरं कर्तव्यमित्यर्थः । शिखरस्य धर्मान्तरमाह - **वर्तुलम् इति** । पद्माकारं वर्तुलं शिखरं कृत्वा तत् पुरोभागे हस्ति-पृष्ठसमं दीर्घाकारं वा किञ्चित् कर्तव्यम् इति भावः । एतेन समग्र विमानस्य वर्तुलत्वं लब्धम् ।। 62 - 64 ।।

**तं. सं.- चतुरस्रं चाष्टकोणं विमानं परिकीर्तितम् ।**
**प्रतिमाया दशगुणं विंशद्गुणमथापि वा ।। 65।।**
**वर्तुलं शिखरन्त्वेकं किरीटाकृतिमद्भवेत् ।**
**सभयाऽपि समेतं वा पृथक्सभमथापि वा ।। 66।।**
**द्विसभं त्रिसभं वाऽपि सगोपुरमथापि वा ।**
**प्राकारवृत्तयुक्तं वा सप्तप्राकारमेव वा ।। 67।।**
**समवृत्तं किष्कुमात्रं बहिर्वा चतुरस्रकम् ।**
**ततः परं किष्कुमात्रं सभाया अन्तरं यदि ।। 68।।**
**ततस्तावत्तृतीयायाः सार्धमेव ह्युदाहृतम् ।**
**किष्कुत्रयं च शक्रादेः स्थानं तद्वत्ततः स्मृतम् ।।69।।**
**ततस्तु मण्टपं कुर्यात् प्रतिष्ठायाः सुलक्षणम् ।। 70।।**
**पूजयेद्वास्तुपुरुषस्योपरिष्ठांस्तु सर्वदा ।**
**देवान् ब्रह्मादिकान् वास्तुर्वराहस्य हरेः सुतः ।**
**पातितो दैवतैर्भूमौ चतुरस्राकृतिः स्थितः ।। 71।।**

पक्षान्तरमप्याह - **चतुरस्रम् इति** । अस्मिन् पक्षे विमान-परिमाणमाह - **प्रतिमाया इति** । अस्मिन्नेव पक्षे किञ्चिदूर्ध्वभागे किरीटसदृशाकारं वर्तुलमेकं शिखरं कर्तव्यमित्याह - **वर्तुलम् इति** । यद्वा चतुरस्रं चाष्टकोणं वेत्यत्रानेकशिखरपक्षे वर्तुलत्वमेव नियतमित्याह

- **वर्तुलम्** इति । तु शब्द एवार्थः । यद्येकशिखरं तर्हि वर्तुलमेव तच्च किरीटाकृतिमद् भवेत् इत्यर्थः । एवं विमाननिर्माणप्रकारमभिधाय तत् पुरोभागे कर्तव्यमाह - **सभया** इति । गर्भगृहपुरोभागे क्रियमाणो मन्दिरविशेषः सभेत्युच्यते । **पृथक् सभम्** इति । व्यवधानेन वा सभा कार्येत्यर्थः । **सगोपुरम्** इति । गोपुरेण सहितं परम्परया विमानसंश्लिष्टं वा गोपुरं कार्यम् इति भावः। **प्राकारवृत्तयुक्तं** चेति । वृत्तप्राकारयुक्तं वेत्यर्थः । एतेन चतुरस्रप्राकारयुक्तं चेति लभ्यते । वित्तानुसारेण कर्तव्यत्वाद् द्विसभम् त्रिसभं वेत्यादिः बहुपक्षोक्तिः । विमानात् परतो बहिः कर्तव्यमाह - **समवृत्तमिति** । विमानाद् बहिः वृत्तं चतुरस्रं वा किष्कुमात्रविस्तृतं मण्डपं कुर्याद् इत्यर्थः । पृथक्त्वपक्षे व्यवधान-परिमाणमाह - **तत** इति । ततः प्रथमसभानन्तरं तावत् किष्कुमात्रं द्वितीयसभाया व्यवधानं कार्यम् इति शेषः । द्वितीयसभापेक्षया तृतीय-सभाव्यवधानपरिमाणमाह - **तृतीयाया** इति । द्वितीयसभापेक्षया तृतीयसभाव्यवधानं सार्धकिष्कुपरिमितम् इत्यर्थः। अथ देवालय-निर्माणप्रकारमभिधाय प्रतिष्ठोपयुक्तमण्डपनिमाणादिकमाह - **तत-स्त्वित्यादिना** ।।65-71।।

**तं. सं.- कृत्वाऽष्टकाष्टकोष्ठानि मध्ये ब्रह्मा चतुष्टये ।**
**पूज्यो द्वये द्वये शक्रो यमो वरुण एव च ।।72।।**
**सोमश्च पूज्या कोणेषु वह्न्याद्याः कोणदेवताः ।**
**पुनस्त्रये त्रये कामं धातारं सविधातृकम् ।। 73।।**
**स्कन्दञ्च पूजयेत् कोणे सूर्यं चैव विनायकम् ।**
**कालं कुवेरं च बहिः प्रत्येकं दिक्षु पूजयेत् ।।74।।**

**'अष्टकाष्टकोष्टानि'** चतुःषष्टिकोष्टानि इत्यर्थः । कोष्टशब्देन देशान्तर्गतगृहा उच्यन्ते । गोपीचन्दनादिना नवसङ्ख्यारेखाः कृत्वा तत्रैव पुनः नवसङ्ख्याका(तिर्यक्) अर्वाचीनरेखाः क्रियन्ते चेत्

चतुःषष्टिकोष्टानि भवन्ति । सर्वमध्यगतकोष्टचतुष्टयापेक्षया परिमित-चतुर्दिक्षु पूर्वादिक्रमेण द्वये द्वये शक्राद्याः पूज्या इत्यर्थः । [1]तत्र विशिष्टेषु चतुर्षु कोणकोष्टेषु पूज्यानाह - **कोणेष्विति** । इन्द्रादिकोष्टापेक्षया परितो बहिर्गतकोष्टेषु पूज्यानाह - **पुनरित्यादिना** । ईशान्यादिदिग्गत-कोष्टापेक्षया व्यवहितदक्षिणभागकोष्टं परित्यज्य ततोऽपि दक्षिण-भागस्थितकोष्टत्रये कामं धातारं पूजयेत् । एवं दक्षिणादिश्रेणीष्वपि आग्नेयादिकोणसमीपगतकोष्टपरित्यागेन त्रये त्रये कामं धातारं च पूजयेत् इत्यर्थः। कोणेषु पूज्यानाह - **स्कन्दम् इति** । कोणचतुष्टयेऽपि स्कन्दमेकमेव पूजयेद् इत्यर्थः । कामादिकोष्टापेक्षया पृष्ठभागे च चतुर्दिक्ष्वपि कोष्टचतुष्टयमवशिष्टं वर्तते । तत्र पूज्यानाह - **सूर्यम् इति** । दिक्षु पूर्वदिक्षु प्रत्येकं प्रत्येकं कामादिकोष्टापेक्षया पृष्टभागे पूजयेदित्यर्थः । अवशिष्टकोणेषु पूर्वादिक्रमेणाह - **हरिमित्यादिभिः** चतुर्भिः श्लोकैः । अत्र आग्नेयकोष्टगतकोष्टमेव पूर्वश्रेण्यामिमं कोष्टं दक्षिणश्रेण्यादिकोष्टमपि । अत्र पूर्वदिग्गतकोष्टपूज्येष्वभिमतदक्षिण-दिग्गतकोष्टपूज्येषु प्रथमस्य इत्यतो द्वावप्याग्नेयकोणगतकोष्टपूज्यौ । एवमवशिष्टकोणत्रयगतकोष्टत्रयेऽपि द्वौ द्वौ पूज्याविति बोद्धव्यम् । यद्वा पुनः त्रये त्रये इति शक्रादिकोष्टपरितः चतुर्दिक्षु पूर्वस्यां दिशि त्रये कामं दक्षिणस्यां दिशि त्रये धातारं पश्चिमे त्रये विधातारं उत्तरे त्रये स्कन्दं च पूजयेदित्यर्थः । कोणपूज्यानाह - **कोणे सूर्यम् इति** । अत्र कोष्टचतुष्टयमवशिष्टं वर्तते । तस्योपयोगं वक्ष्यामः। कामादिकोष्टापेक्षया परितः पूज्यदेवताः पूर्वादिक्रमेणाह - **बहिरिति** ।। 72 - 74 ।।

उक्तमेव विवृणोति - **हारम् इत्यादिना** ।

**तं. सं.- हारं हरिं गभीरं च गाहनं गेहनं गुहम् ।**
**भानुमङ्गारकञ्चैव पूर्वस्यां दिशि पूजयेत् ।। 75 ।।**

---

1. तत्र अवशिष्टेषु इति स्याद्वा ।

दारणं विदरिं दूतं प्रद्योतं द्योतनिं दरिम् ।
मृत्युं शनैश्चरं चैव दक्षिणस्यां प्रपूजयेत् ।।76।।
पुष्करं क्षरणं क्षारं विक्षणं क्षोभणं क्षरम् ।
चार्वङ्गं भार्गवं चैव पश्चिमस्यां प्रपूजयेत् ।।77।।
चारं विचारं प्रचरं सञ्चारं चारणं चरम् ।
बृहस्पतिं बुधं चैवाप्युत्तरस्यां प्रपूजयेत् ।
एवमेव विमानस्य कृतेः प्रागपि पूजयेत् ।। 78।।

अत्र दक्षिणदिश्येकं कोष्टं न्यूनं, पश्चिमदिश्येकं, उत्तरस्यां दिशि तु कोष्टद्वयं न्यूनम् । एवं चत्वारि कोष्टानि न्यूनानि । अतोऽन्तश्चत्वारि कोष्टानि क्रमेण तत्र तत्र ग्राह्यानि ।। 75 - 78 ।।

तं. सं.- सप्तपर्णमयं साधु कारयेन्मण्टपं ततः ।
सप्तहस्तं द्विषड्ढस्तमथवा द्विगुणं ततः ।। 80।।
चतुर्गुणं वा सम्यक् च चतुरस्रं सहाजिरम् ।
अन्यं च मण्टपं दीर्घं पञ्चहस्तं तु कारयेत् ।।81।।

एवं च मध्ये वास्तुमुक्त्वा प्रकृतमण्डप(करण)प्रकारमाह - **सप्तपर्णमयीम्** इति । भूर्जवृक्षमयमित्यर्थः । सप्तपर्णं विशालत्वगित्यमरः । सभाजिरं विवरं तेन सहितम् इत्याहुः । मण्टपान्तः परित उपवेशनार्थं क्रियमाण किष्कुपरिमित उन्नतप्रदेशः सहजशब्देनोच्यत इत्यप्याहुः ।।80, 81।।

तं. सं.- त्रिचतुष्कोणकं तत्र मध्ये प्रागायतं शुभम् ।
कारयेन्मण्डलं साधु हस्तमात्रं तु विस्तृतम् ।। 82।।

**त्रिचतुष्कोणकम्** इति । त्रिगुणितचतुष्कोणकं द्वादशकोणोपेतम् इत्यर्थः । **'प्रागायतं'** पूर्वपश्चिमदैर्घ्योपेतम् ।

तं. सं.- तत्र द्वादशपात्राणि स्थापयेत् पालिकादिकम् ।
पालिकास्तु चतुर्विंशत्यंङ्गुलोच्छ्र्यसंयुताः ।। 83।।
अष्टादशाङ्गुलाश्चैव तथा पञ्चमुखा अपि ।
द्वादशाङ्गुलकाश्चैव शरावाः पश्चिमानुगाः ।। 84।।
तत्र विष्णुं चतुर्मूर्तिं पूजयेद्भक्तितस्त्रिशः ।
सप्तधान्यानि तेष्वेव पूरयेदंकुरार्थतः ।। 85 ।।
तत्र नित्यं बलिं दद्याद् विष्णवे दशरात्रकम् ।
ब्रह्मशङ्करगीर्वाणपितृगन्धर्वयक्षकैः ।। 86 ।।

तत्रेति । तत्र मण्डले । द्वादशपात्राणि स्थापनीयानि इत्यर्थः । तानि च पात्राणि प्रागेव कारयेत् इति । पालिकैव आदिः यस्य पञ्चमुखादेः स पालिकादिकः । तं पालिकापञ्चमुखशरावानिति यावत्। प्रागेव कारयेद् इत्यर्थः । यद्वा कारयेदित्यतः पूर्वं स्थापितानि इति शेषः । ऋत्विग्भिः पूरयेत् इति यावत् । स्वार्थिका वा णिच् । पालिकाश्चत्वारः।(पञ्चमुखाश्चत्वारः) शरावाश्चत्वार इत्येवं द्वादश-पात्राणीति ध्येयम् । पालिका पञ्चमुखशरावाणां लक्षणानि क्रमेणाह - **पालिकास्त्वित्यादिना** । पञ्चमुखा इति ख्यातो द्वादशाङ्गुलपरिमिता इत्यर्थः । पालिकाभिः सह पञ्चमुखानां समुच्चयार्थः तथा शब्दः । तत् परिमाणेन अनेन तत्परिमाणसमुच्चयार्थः चशब्दः । पश्चिमानुगा इति पृष्टभागे किञ्चित् कोणोपेता इति यावत् । **त्रिश इति** । त्रिविधेषु पात्रेष्वपि प्रत्येकमेकैकवारं पूजने द्वादशपात्रेष्वपि त्रिशः पूजा । अङ्कु-रार्थं सप्त इति ।। 83 - 86।।

तं. सं.- भूतैश्च पायसेनैव तथा पद्माक्षतेन वा ।
अन्नापूपेन पुष्पान्नैरन्नलाजाक्षतैरपि ।। 87 ।।

13

सक्तुभिश्च क्रमेणैव देवान्तं पायसेन वा ।
तदेव प्रतिमायाश्च कारयेदधिवासनम् ।। 88।।
पञ्चगव्ये सप्तरात्रं क्षिप्त्वा पुरुषसूक्ततः ।
वेदांश्च चतुरः सम्यक् पारयेयुर्द्विजोत्तमाः ।।89।।
प्राच्यादिद्वारगौ द्वौ द्वावेकैकं तु दशावराः ।
यथालब्धं यथावित्तमथवा विष्णुतत्पराः ।। 90।।

**भूतैश्चेति** । सहिताय इति शेषः । विष्णव इति सम्बन्धः । पायसेनेत्यादि बलिं दद्यादित्यनेनान्वयः । तत्र विष्णवे पायसेन, ब्रह्मणे पद्माक्षतेन, शङ्कराय अन्नापूपेन, देवेभ्यः पुष्पान्नैः, पितृभ्योऽन्नैः, गन्धर्वेभ्यो लाजैः, यक्षेभ्यो अक्षतैः, भूतेभ्यो सक्तुभिः, इति विवेको ज्ञातव्यः । **प्राच्यादीति** । एकैकं वेदमुद्दिश्य प्राच्यादिद्वारि द्वौ द्वौ ब्राह्मणौ स्थित्वा तु द्विजोत्तमाः चत्वारो वेदानपि पारयेयुः। पारायणं कुर्युः इत्यर्थः। **दशावराः इति** । दश अनवराः येषु ते दशावराः । दशभ्यो अन्यूना इति यावत् । दशभिः पारायणकरणं अवरपक्ष इति । पक्षान्तरमप्याह **- यथा इति** । अथवा यथालब्धम् इति सम्बन्धः । विष्णुतत्परा द्विजोत्तमा इति सर्वत्र सम्बन्धः ।। 87 - 90 ।।

एवं पञ्चगव्याधिवासवेदपारायणप्रकारमभिधाय प्रतिष्ठाङ्गहोमं कर्तुं कुण्डकरणप्रकारमाह - त्रयोदश इति ।

तं. सं.- त्रयोदशात्र कुण्डानि परितः कारयेद् बुधः ।
उक्तलक्षणयुक्तानि प्रधानन्त्वग्निकोणके ।। 91।।
साक्षात्तु कोणगाद्धस्तमात्रमन्तरतः सुधीः ।
आज्याहुतिं तेषु कुर्यात् प्रत्येकं लक्षसङ्ख्यकम्।। 92
प्रत्येकमयुतं वाऽपि प्रधाने लक्षसङ्ख्यकम् ।
अर्धं तदर्धमथवा मूलमन्त्रेण मन्त्रवित् ।। 93 ।।

परितः विमानस्य परितः दिक्षु द्वे द्वे कोणेष्वेकैकम् इति द्वादश कुण्डस्थानानि केशवाद्यावरणन्यायेन सिद्धानि । **उक्तेति** । अवशिष्टस्य प्रधानस्यैकस्य कुण्डस्य स्थानमाह - **प्रधानम्** इति । प्राधान्यं तु बहु होमाधिकरणत्वेन इति ज्ञेयम् । प्रत्येकमयुतमित्यस्य अपवादमाह - **प्रधानम्** इति । अत्र च पक्षान्तरमाह - **अर्धम्** इति । मूलमन्त्रेणे-त्यस्य पूर्वेणापि सम्बन्धः ।। 91 - 93 ।।

**तं. सं.- पञ्चविंशतितत्त्वार्थे प्रधाने जुहुयात् पुरः ।**
**प्रत्येकं तु सहस्रं वा प्रत्येकं शतमेव वा ।। 94 ।।**
**शतं पुरुषसूक्तेन गायत्र्या च सहस्रकम् ।**
**कृत्वा जलाधिवासं च पूर्वं वा पञ्चगव्यतः ।।195 ।।**

पुरः पुरा प्रधानकुण्डे मूलमन्त्रेण होमापेक्षया पूर्वम् इति यावत्। तत्त्वमन्त्रेण होमसङ्ख्यामाह - **प्रत्येकम्** इति । पुरुषसूक्तगायत्रीभ्यां होमोऽपि प्रधान इति ज्ञेयम् । **पञ्चगव्येति** । पञ्चगव्याधिवासतत्पूर्वं वा पश्चाद् वा इति एकार्थः ।। 94, 95 ।।

सेतिकर्तव्यताकं कलशस्थापनप्रकारमाह - **चक्राब्जम्** इति ।

**तं. सं.- चक्राब्जं भद्रकं वाऽपि मण्टपे मण्डलं शुभम् ।**
**पद्मं वृत्तत्रयं चक्रं राशयो वीथिका लताः ।। 96 ।।**
**शोभोपशोभिकाश्चापि चक्राब्जस्य तु लक्षणम् ।**
**चतुरस्रं विना चक्रं विशेषो भद्रके स्मृतः ।। 97 ।।**
**सहस्रमर्धं पादं वा कलशांस्तत्र पूजयेत् ।**
**शतं तदर्धं पादं वा वित्ताभावे निगद्यते ।। 98 ।।**
**क्वाथेन क्षीरिवृक्षाणां तथा पञ्चामृतैरपि ।**
**पञ्चगव्येन शुद्धेन जलेन च पृथक् पृथक् ।।99 ।।**

**पूरयेत् कलशान् मध्यं शुद्धोदैनैव पूरयेत् ।**
**ब्राह्मस्यैव चतुर्दिक्षु गन्धोदानां चतुष्टयम् ।।100।।**
**चतुर्दले सिते पद्मचतुष्के मण्डले स्थिते ।**
**पूर्वादिक्रमयोगेन रसक्वाथशुभोदकान् ।। 101 ।।**
**गन्धांश्च स्थापयेत्पञ्चगव्यं शुद्धान्तरे न्यसेत् ।**
**पृथक् चतुर्दलं पद्मं रक्तं कृत्वाऽल्पकं सुधीः ।। 102।।**

मण्डलं कुर्यात् इति शेषः । **चतुरस्रम् इति** । चक्रं विना चतुरस्रं भद्रके विशेष इति सम्बन्धः । पञ्चविंशतिकलशपक्षे स्थापनप्रकारमाह - **ब्राह्मस्य इत्यादिना** । अस्मिन् पक्षे मध्ये शुद्धोदं ब्राह्मकलशं स्थापयित्वा तस्य चतुर्दिक्षु गन्धोदककलशानां चतुष्टयं स्थापनीयम् । तत् परितः चतुर्दिक्षु शुद्धानि चतुर्दलानि पद्मानि कुर्याद् इति ग्राह्यम् । अनन्तरं चक्राब्जे भद्रके वा पूर्वोक्ते मण्डले स्थिते चतुर्दले सिते पद्मचतुष्टयेऽपि पूर्वभागस्य पद्मे पञ्चामृतपूर्णान् पञ्चकलशान् दक्षिणभागस्य पद्मे गन्धपूर्णान् पञ्चकलशान् पश्चिमभागस्य पद्मे शुद्धोदपूर्णकलशान् उत्तरभागस्य पद्मे गन्धोदपूर्णान् पञ्चकलशान् इति क्रमेण स्थापयेत् इत्यर्थः । पश्चिमभागे शुद्धोदकलशं स्थापयेत् इत्यस्य अपवादमाह - **पञ्चगव्यम् इति** । पश्चिमे चतुःसङ्ख्याकानेव शुद्धोदकलशान् स्थापयित्वा तन्मध्ये पृथक् चतुर्दलं रक्तमल्पक पद्मं कृत्वा तत्र पञ्चगव्यं स्थापयेद् इत्यर्थः ।। 96 - 102 ।।

**तं. सं.- पञ्चाशत्त्वे तु गन्धोदं सर्वमध्ये निधापयेत् ।**
**ब्राह्मस्य पुरतस्त्वेकं शार्वं संस्थापयेद् बृहत् ।**
**अष्टदिक्ष्वष्टपद्मेषु पञ्चकं पञ्चकं न्यसेत् ।। 103।।**

पञ्चाशत् कलशपक्षे स्थापनाप्रकारमाह - **पञ्चाशत्त्वे इति** । कलशान् इति शेषः । मध्यं शुद्धोदेनैव । ब्राह्मस्योक्तत्वात् । तत्

परितः स्थाप्यानाह - **गन्धोदम् इति** । सर्वमध्ये सर्वेषां वक्ष्यमाण सर्वकलशानां मध्ये गन्धोदकक(ल)शाष्टकं स्थापयेत् । एवं च मध्ये दशकलशा भवन्ति इति ज्ञेयम् । **'गन्धोदं सर्वमध्ये विनिक्षिपेद्'** इति साम्प्रदायकपाठान्तरम् । तस्य अयमर्थः । पञ्चविंशतिकलशपक्षे उत्तरदिशि ये गन्धोदकलशाः पञ्च स्थापनीयाः तान् सर्वान् ब्राह्मस्य पुरतो निधापयेत् । गन्धोदं सर्वम् इति जात्येकवचनम् । ब्राह्मस्य पुरतः **'एकं शार्वं'** शार्वत्वेनेति यावत् । स्थापयेत् । एवं च मध्ये ब्रह्मकलशः, शार्वकलशः, गन्धोदकलशा अष्ट, आहत्य दशकलशाः भवन्ति इति । अवशिष्टचत्वारिंशकलशानां स्थापनाप्रकारमाह - **अष्ट इति** । अथ पूर्वाद्यष्टदिक्ष्वैकैकस्यां दिश्यैकपद्मं (चतुर्दलं) कृत्वा तत्र तत्र पञ्च पञ्च कलशाः रसक्वाथ(शुभोदक)सुगन्धोदपूरिताः स्थापनीया इति भावः । तत्र पूर्वदिक्ष्ववस्थिते पद्मे आग्नेयस्थपद्मे च पञ्चामृतकलशा स्थापनीयाः । एवं द्वयोरेकैकद्रव्यपूर्णाः कलशाः स्थापनीयाः । तथा पश्चिमदिशि शुद्धोदकलशा अष्टसङ्ख्याकाः तन्मध्ये रक्तपद्मे पञ्चगव्यद्वयं स्थापनीयम् इति द्रष्टव्यम् ।। 103 ।।

**तं. सं.- अनेन क्रमयोगेन कलशा अखिला अपि ।। 104।।**
**तत्तद् द्रव्यमयास्तत्र तत्र स्थाप्यास्तु बाह्यतः ।**
**तदैवाङ्कुरपात्राणि परितस्तत्र विन्यसेत् ।। 105।।**
**कुशोदकं च कार्पूरं कौङ्कुमं चान्दनं तथा ।**
**तुहिनोदं हरिद्रोदमौशीरं कौष्ठसार्षपम्[1] ।। 106।।**
**नदीसङ्गमजं चैव ताटाकं कौप्यमेव च ।**
**निर्झरोदमिति प्रोक्ता विशेषकलशा इमे ।**

---

1. कोष्ठसारके इत्यपि क्वचित् ।
"उशीरं कुङ्कुमं सांसी कुष्ठं मलयजोऽगरुः ।
हीरबेरं मुरं चेति गन्धाष्टकमुदीरितम् ।।" इति योगदीपिका ।

शुद्धोदद्वयमप्येतन्महातीर्थसमुद्भवम् ।। 107।।

उक्तं कलशस्थापनप्रकारं शतकलशादिपक्षेऽप्यतिदिशति - अनेन इति । शतकलशपक्षे मध्ये ब्राह्मकलशौ तत् परितः (तत्पूर्वतः शार्वकलशौ द्वौ)। षोडशगन्धोदकलशाः तत् परितः पूर्वाद्यष्टदिक्षु एकैकस्यां दिशि बाह्यतो बाह्यक्रमेण द्वे द्वे पद्मे कृत्वा तत्रैकस्मिन् पद्मे पञ्चामृतादि-तत्तद्द्रव्यमयाः पञ्च पञ्च कलशाः स्थाप्याः । तत्र शुद्धोद(के)न षोडशकलशान् कृत्वा तदन्तरे रक्तपद्मे पञ्चगव्यकलशचतुष्टयं स्थाप्यम् इति ज्ञेयम् । सपञ्चाशद् द्विशतकलशपक्षे तु ब्राह्मकलशाः पञ्च शार्वकलशाः पञ्च गन्धोदाः चत्वारिंशत् । तत् परितः पूर्वाद्यष्टदिक्षु एकैकस्यां दिशि बाह्यतः बाह्यक्रमेण पञ्च पञ्च पद्मानि कृत्वा एकैकस्मिन् पद्मे तत्तद्द्रव्यमयाः पञ्च पञ्च कलशाः स्थापनीयाः । तत् पश्चिमे शुद्धोदांश्चत्वारिंशत् कलशान् स्थापयित्वा तदन्तरे रक्तपद्मे पञ्चगव्यकलशा दश स्थापनीयाः । अनेन क्रमेण एतस्माद् द्विगुणश्चेत् पञ्चशतकलशाः भवन्ति । पुनः तद्द्विगुणाश्चेत् सहस्रकलशा भवन्ति इति ज्ञेयम् । [1]x x x शब्देन चम्पकोदकमुच्यत इत्याहुः । शुद्धोदद्वयम् इति । एतत् ब्राह्मं शार्वं,चेति शुद्धोदकद्वयं वा । ब्राह्मं पश्चिमे स्थाप्य कलशसमूहं चेति शुद्धोदद्वयं वा । महातीर्थसमुद्भवं ज्ञेयम् इति शेषः ।। 104 - 107 ।।

तं. सं.- चतुर्विंशति मूर्तीनां वर्णमूर्तीस्तथाऽपराः ।
आवाहयेच्छतत्वे तु क्रमव्युत्क्रमतस्तु ताः ।
वर्णमूर्तीः पुनश्चैव द्विचतुर्वारमेव वा ।। 108।।
सहस्रकलशादित्वे जपेन्मन्त्रांश्च शक्तितः ।
ततस्तु पञ्चघोषैश्च वेदघोषैस्तथाऽऽदरात् ।। 109।।

---

1. कौष्ठशब्देन इति स्यात् ।

आनीय प्रतिमां स्नानं कारयेत् प्रणवेन तु ।
मन्त्रैः पुरुषसूक्तान्तैर्विश्वतश्चक्षुषा तथा ।।110।।
पुनश्चाष्टाक्षरेणैव प्रणवेनैव भक्तितः ।
स्नापयित्वा गन्धजलैर्गन्धपुष्पादिभिः पुनः ।। 111।।
अलङ्कृत्य स्थापयेत्तु प्रतिमां प्रणवेन तु ।
जपेदष्टाक्षरं मन्त्रं त्तत्तन्मूर्तिमनुं तथा ।। 112 ।।
अष्टोत्तरशतं मन्त्री ध्यायेत्तेजोमयीं पुनः ।
प्रतिमां प्रतिमान्तस्थां तन्मध्ये परमं वपुः ।। 113।।
चिदानन्दरसं सर्वगुणसम्पूर्णमुत्तमम् ।
पञ्चविंशतितत्त्वानां देवतास्तदनन्तरम् ।
स्थापयेत्प्रतिमामध्ये परितः केशवस्य तु ।। 114।।
तन्नात्वाहार्षसूक्तं च घर्मसूक्तं च वैष्णवम् ।
सूक्तं च विश्वकर्मीयं पौरुषं सूक्तमेव च ।।115।।
जप्त्वा चैव निजं मन्त्रं पुनरष्टाक्षरं सुधीः ।
प्रणवं च जपेद्विष्णुं ध्यायेदुत्तमरूपिणम् ।। 116।।
ततस्तु कलशैर्बाह्यक्रमेणैव जनार्दनम् ।
स्नापयेदुक्तमन्त्रैस्तु मध्यमं प्रणवेन तु ।। 117 ।।
अष्टार्णेन निजेनापि तथा पुरुषसूक्ततः ।
आवाहनं च स्नपनं पञ्चगव्येन मध्यवत् ।। 118।।
पूर्वाद्युत्तरपर्यन्तः कलशक्रम उच्यते ।
जप्त्वा पुनश्च तन्मन्त्रान् पूजयेच्च विधानतः ।
द्वारलोकपतिभ्यश्च बलिं दत्त्वा यथाक्रमम् ।। 119।।
वस्त्ररत्नहिरण्याद्यैरलङ्कृत्य विभूतितः ।
गुरवे दक्षिणां दद्यात् कोटिं लक्षं सहस्रकम् ।। 120।।

शतमर्धं तदर्धं वा निःस्वो भक्त्या क्षमापयेत् ।
तदर्धमृत्विजां चैव तदर्धं पारणाकृताम् ।। 121।।
आ श्वभ्य आ श्वपाकेभ्यो दद्यादन्नं समस्तशः ।
पुरस्तात्परतश्चैव सप्तरात्रं निरन्तरम् ।। 122 ।।
सुवर्णवस्त्ररत्नाद्यैरागताभ्यागतानपि ।
पूजयेच्छक्तितो भक्त्या प्रीयतां भगवानिति ।। 123।।
गीतनृत्तैश्च वाद्यैश्च पुराणैरितिहासकैः ।
सूक्तैर्मङ्गलघोषैश्च वैदिकैर्दिनसप्तकम् ।। 124 ।।
नयेत्ततो महाराज विभूत्याऽवभृथं सुधीः ।
कारयेद्देवदेवस्य स्वाध्यायैर्गीतनृत्तकैः ।। 125 ।।
महानदीसङ्गमे तु तीर्थे चातिप्रशस्तके ।
स्नापयेत्पूर्ववन्मन्त्रैः पुंसूक्तान्तैः स्मरन् हरिम् ।।126
ततः पूर्ववदागत्य प्रवेश्य पुरुषोत्तमम् ।
पूजयित्वा विधानेन दत्त्वा दानानि शक्तितः ।
गुरुं च भक्त्या सम्पूज्य स्वीकुर्यादाशिषस्ततः ।। 127।।
शतप्रस्थादनूनं तु नैवेद्यं पायसोत्तरम् ।
दिनेष्वेतेषु दातव्यं सघृतं ससितादिकम् ।
पश्चादपि यथाशक्ति पूजा कार्या हरेः सदा ।। 128।।

पञ्चविंशतिकलशपक्षे आवह्यमूर्तीराह - **चतुर्विंशतिमूर्तीनां इति।** केशवादीनाम् आवहनं कार्यम् इति शेषः । प्रतिष्ठेयमूर्त्या सह पञ्चविंशतित्वं ज्ञेयम् इत्याहुः । पञ्चाशत्कलशपक्षे आवाह्यमूर्तीराह - **वर्णमूर्तीरिति** । [1]व्यासादिमूर्तीरित्यर्थः । आवहयेदिति सम्बन्धः ।

---

1. अजादिमूर्तीरिति पाठः स्यात् ।

शतकलशपक्षे तु आह - **वर्णमूर्तीरिति** । शतत्वे तु क्षकारप्रतिपाद्य नृसिंहमूर्त्या सहितैकपञ्चाशद्वर्णमूर्तीः अपराश्चतुर्विंशमूर्तयः । आत्माद्येत्यादिनोक्ताः शतमूर्तयश्च आवहयेत् इत्यर्थः । सपञ्चाशद् द्विशतकलशादिपक्षमाह - **क्रमेति** । [1]**'सहस्रकलशादित्वे'** सपञ्चाशद् द्विशतकलशत्व इत्यर्थः । सपञ्चाशद् द्विशतकलशत्वे उक्ताः शत-मूर्तीरादौ क्रमेणानन्तरं व्युत्क्रमतः । पुनर्वर्णमूर्तीराह - **ततस्तु इति** । विश्वतश्चक्षुरिति ऋचा गन्धजलैः कुशोदकमित्यादिनोक्तविशेष कलशस्थितगन्धजलैः इत्यर्थः । इदानीमभिभूतप्रतिमायाः स्थापनध्यान मन्त्रजपस्नानाद्याह - **स्नापयेत् इत्यादिना** । तेजोमयीं प्रतिमां तस्थां तेजोमयीं प्रतिमां ध्यायेदित्यन्वयः । तेजोमयी प्रतिमा च प्रति-मागततेजोरूपभागेत्याहुः । मुख्यवायुः इत्यपि (व्याचक्षते) एतन्मध्ये परमं वपुः। उत्तमरूपं परमात्मानम् इति शेषः । ध्यायेदित्यनुवर्तते । निजं मन्त्रं तत्तन्मूर्तिमनुनाऽऽवाहनं चेति प्रतिमायां भगवदावाहनं पञ्चगव्येन स्नापनं च मध्यवत् ब्राह्मकलशाभिषेकमन्त्रवत् प्रणवेन इति भावः। यद्वा पञ्चगव्येनावाहनं पञ्चगव्येन स्नापनं च मध्यकलश-वत् । तेन पञ्चविंशतिकलशपक्षे एका मूर्तिरनुक्ता सेदानीं उक्तेति ज्ञेयम् । **तन्मन्त्रानिति** । प्रतिमामन्त्रान् इत्यर्थः । **निस्वो निर्धनः** । पारणाकृतां पारायणकर्तॄणाम् । विभूतितः विभवानुसारेण । **आगता अभ्यागतानिति** । यदृच्छया आगता उत्सवमुद्दिश्य समागताः इति ।। [2](समागतान् वित्तशाठ्यमकृत्वा वस्त्रस्त्रहिरण्यादिभिः पूजयेत् इति भावः) ।। 108 - 128 ।।

एवं प्रतिमाप्रतिष्ठाप्रकारमभिधाय जीर्णालयोद्धारप्रकारमाह - **जीर्णेत्यादिना** ।

---

1. इत आरभ्य वाक्यत्रयार्थः न स्फुटः ।
2. अत्र ग्रन्थपातः दृश्यते ।

तं. सं.- जीर्णालयोद्धृतौ चैव तत्त्वमन्त्रान् स्वकं तथा ।
प्रातिलोम्येन जप्त्वैव मूर्तौ सङ्कोचयेद्धरिम् ।।129।।
उक्तेनैव विधानेन तदर्धैर्विभवैः सुधीः ।
पादमात्रैरपि हरिं स्नापयित्वा यथोदितम् ।।130।।
एतेनैव विधानेन कृत्वा देवालयं पुनः ।
स्थापयेत्पुण्डरीकाक्षं द्विगुणेन प्रवाहणात्।।131।।
विभवेनानुलोमेन जपन्मन्त्रान् पुनस्तथा ।
आराधयेज्जगन्नाथं ध्यायन् भक्त्या यथोदितम् ।। 132।।
यात्राऽपि पूर्ववत्तत्राप्युत्सवेषु च सर्वशः ।

'तत्त्वमन्त्रान्' तत्त्वदेवतामन्त्रान् । स्वकं तत्त्वमूर्तिमन्त्रं प्रातिलोम्येन व्युत्क्रमेण । मूर्तौ सङ्कोचयेत् इति । प्रतिमां तत्र हि विमानादिषु च सन्निहितं परमात्मानं प्रार्थनाय । प्रतिमायामन्तर्गतं कुर्याद् इत्यर्थः। उक्तेनैव इति । प्रागुक्तेन कलशस्थापनमूर्त्यावाहनादिविधानेन । यथोदितं मृद्दारुशैलैरित्यादिना यथोदितं एतेनैव विधानेन इति सम्बन्धः। प्रवहणाद् इति । मूर्तौ सङ्कोचनाद् इत्यर्थः । सङ्कोचकाले कृतविभवा-पेक्षया द्विगुणेन विभवेनेति भावः । यात्रापीति । तत्रापि जीर्णा-लयोद्धृतावपि । अवभृतस्नानार्थं यात्रापि कार्येत्यर्थः ।। 129-132।।

प्रसङ्गादुत्सवेषु यात्रा कार्येत्याह - उत्सवेषु चेति ।

तं. सं.- कलशोक्तविधानेन पूजा बलिहृतिस्तथा ।
उत्सवेषु सदा कार्या कलशश्चोत्सवादनु ।
यात्रा स्नानं च कर्तव्यं सम्यगुक्तविधानतः ।।133।।

यात्रा कार्येति सम्बन्धः । उत्सवेषु च कर्तव्यान्तरं वदन्नुक्तमे(व) विवृणोति कलशेत्यादिना । कलशोक्तविधानेन कलशस्थापनं कृत्वा

तदभिषेकपूर्वकं पूजा कार्येत्यर्थः । **सदा उत्सवेषु** इति । प्रत्युत्सवेष्विति भावः । उत्सवादनु उत्सवानन्तरं च कलशपूजापूर्वकं कलशाभिषेकः कार्यः । **उक्तविधानतः** । नयेतेत्यादिनोक्तविधानतः । यात्रा सम्यक् स्नापनं च कर्तव्यम् इत्यर्थः ।। 133 ।।

**तं. सं.- चोरचाण्डालपतितश्वोदक्यादिप्रवेशने ।**
**शवाद्युपहतौ चैव पूजाविच्छेदने तथा ।। 134 ।।**
**स्नापनोक्तेन मार्गेण प्रायश्चित्तकृतिः स्मृता ।**
**सर्वत्र विष्णुगायत्र्या होमः स्यादयुतावरः ।।135।।**
**नावाव्याद्यभिधानानि विद्महे धीमहे तथा ।**
**प्रचोदयात्तृतीयाधस्तन्नो गायत्रिनामिका ।। 136।।**
**दुर्गाशिवस्कन्दसूर्यविनायकमुखानपि ।**
**स्थापयेदुक्तमार्गेण तत्तन्मन्त्रैः स्मरन् हरिम् ।। 137।।**

संप्रोक्षणविधानमाह - **चोरेत्यादिना** । उदकी रजस्वला । आदि-शब्देन गर्दभादिग्रहणम् । शवादि इत्यादिपदेन प्रसवादि गृह्यते। तदुक्तं हारीतस्मृतौ **'प्रसवे मरणेऽपि वा । रजस्वला प्रवेशे च सेके वर्षजलैरपि । पूजायाश्चैव विच्छेदे गर्दभादिप्रवेशने । भूमौ घाते तथोच्छिष्टस्पर्शनेऽप्यङ्गदाहने । पुनः संप्रोक्षयेद् बिम्बम्'** इति । प्रति-माजीर्णालयोद्धृत्यादिषु सर्वत्रापि कर्तव्यविशेषं सिंहावलोकनन्यायेन आह - **सर्वत्र इति** । विष्णुगायत्रीमुद्धरति - **नावाव्यादीति** । ना वा वि इत्येते वर्णा एव आदयो पूर्ववर्णभूता एषाम् अभिधानानि तानि नारायण वासुदेव विष्णिवत्यभिधानानि। अनुक्तसमुच्चायकेन तथाशब्दे-नाद्यद्वितीययोः चतुर्थ्यन्तत्त्वं तृतीयस्य प्रथमान्तत्वं वा अभिप्रैति । तेषां शब्दानाम् अनन्तरं क्रमेण विद्महि धीमहि प्रचोदयाद् इति शब्दा-स्तृतीयस्य विष्णुरित्यभिधानस्य अथ पूर्वभागे तन्न इति शब्दः । इयं गायत्री नामिकेत्यर्थः । तथा चैवं गायत्री निष्पत्तिः । **'नारायणाय**

विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात्' इति । अन्यदेवता-प्रतिमाप्रतिष्ठाप्रकारमाह - **दुर्गेत्यादिना** ।। 134 - 137 ।।

**तं. सं.- गोलकद्वितयं विष्णोस्त्रितयं वा प्रकीर्तितम् ।**
**अन्यदेवप्रतिष्ठासु तदन्तश्चिन्तयेद्धरिम् ।।138।।**
**विष्णुस्मृतिविहीना तु पूजा स्यादासुरी सदा ।**
**गृह्णन्ति देवता नैतां ततः स्याद्देशविप्लवः ।। 139।।**
**व्याधिचोरादिभिस्तस्मादन्तर्ध्येयो हरिः सदा ।**
**विष्णुभक्तिविहीनस्य गतिः स्यान्न शुभा क्वचित् ।।140**
**भक्तस्याप्यन्यदेवेषु तस्माद्ध्येयो हरिः सदा ।**
**संस्मृतो भगवान् विष्णुः सर्वमङ्गलमङ्गलः ।**
**समस्ताभीष्टदायी स्यात्तेन ध्येयोऽखिलैर्जनैः ।। 141**

**गोलकद्वितयं वापि** इति । विष्णोर्बाह्यप्रतिमामविवक्षित्वा अन्य-देवतारूपा प्रतिमा तेजोमयप्रतिमा चेति गोलकद्वितयम् । बाह्यप्रति-माविवक्षया तु तया सह गोलकत्रितयं प्रकीर्तितम् इत्यर्थः । **'तत्वमन्त्रान् स्वकं तथा'** इत्युक्तम् । के ते तत्त्वमन्त्रा इत्यतः तेषाम् उद्धारं कर्तुं तत्त्वानां परिसङ्ख्यानपूर्वकं तत्प्रतिपाद्यदेवान् तत्ध्यानं च आह - **पुरुषोऽव्यक्तमित्यादिना** ।। 138 - 141 ।।

**तं. सं.- पुरुषोऽव्यक्तञ्च महानहङ्कारो मनस्तथा ।**
**दशेन्द्रियाणि शब्दाद्या भूतेताः पञ्चविंशतिः ।। 142।।**
**तत्त्वाख्या कालमाये च नियतिर्मतिरेव च ।**
**विद्या कला प्रवृत्तिश्च द्वात्रिंशत्तत्त्वसङ्ग्रहः ।। 143।।**
**स्फूर्तिः संवित् प्रतिष्ठा च शक्तिरित्यपराणि तु ।**
**महालक्ष्मीस्वरूपाणि ह्येकादश विदो विदुः ।**

विष्णोरपि स्वरूपाणि तन्नाम्नैकादशैव तु ।। 144।।
प्रधानोपमवर्णानि द्विभुजान्यप्यशेषतः ।
कृताञ्जलिपुटान्येव प्रधानं तं हरिं प्रति ।। 145।।
सर्वाण्येतानि तत्त्वानि ब्रह्मा तु पुरुषः स्मृतः ।
महांश्चाव्यक्तनाम्नी तु ब्रह्माणी सम्प्रकीर्तिता ।
एवं वायुरपि ज्ञेयो भारती चैव तत्त्रयम् ।।146 ।।
रुद्रोऽहङ्कार उद्दिष्टः स्कन्देन्द्रौ मन उच्यते ।
अहङ्कारः शेषवीन्द्रावपि विद्वद्भिरीरितौ ।।147।।
दिग्वायुसूनुसूर्याश्च वरुणश्चाश्विनावपि ।
वह्निदक्षाविन्द्रसूनुर्मित्रश्चैव मनुस्तथा ।
इन्द्रियाख्याः शब्दनामा बृहस्पतिरुदाहृतः ।। 148।।
अन्ये तु सूनवो वायो रुद्रस्यापि प्रकीर्तिताः ।
एतेषु भगवान् विष्णुः प्रधानतनुरेव तु ।। 149 ।।
ध्येयः परात्मनोर्मध्ये तत्त्वनामा तदर्थयोः ।
जपे न्यासे नमोऽन्तश्च स्वाहान्तो होमकर्मणि ।। 150।।
त्रिचतुष्षड्दशावृत्तिरेतेषान्तु हुतादिके ।
न्यासोऽङ्गुलीषूरुबाहुमध्येषु व्युत्क्रमे स्मृतः ।। 151।।

पुरुषो जीवतत्त्वम् । वायुसूनुः प्राणः । सूनवो वायोरिति । अत्रापानव्यानोदानसमानाः वायुसूनवः । स्पर्शरूपरसगन्धनामकाः । कस्य सूनवो विनायकाद्याः आकाशादिशब्दवाच्या इति ज्ञातव्यम् । अत्र सर्वत्र तन्नियामकत्वेन तत्तत् शब्दवाच्यत्वम् । तत्त्वमन्त्रानुद्धरति - **परात्मनोरिति** । तदर्थयोः तत्त्वमेवार्थः मुख्यतयाभिधेयो ययोः तयोः तत्त्वविशेषणीभूतयोरिति यावत् ।

यद्वा तदर्थयोरुद्देश्ययोः चतुर्थ्यंतयोरिति यावत् । तादृशयोः परमात्मनोः पर(शब्दा)त्मशब्दयोः मध्ये तत्त्वनाम तत्त्ववाचकं पुरुषादिपदं प्रयोक्तव्यम् । तथा च पराय पुरुषात्मन इति सामानाधिकरण्यसिद्धिरिति ज्ञेयम् । जप इति । जपे न्यासे च नमोन्त, होमकर्मणि तु स्वाहान्त शब्दतो मन्त्रः कर्तव्य इति शेषः । तथा च 'पराय पुरुषात्मने नमः स्वाहा' इत्यादि मन्त्रनिष्पत्तिः । एतैर्होमजपादिकं प्रतिष्ठापेक्षया अन्यत्र कतिवारं कार्यम् इत्यत आह - त्रीति । भवेदिति शेषः । व्युत्क्रमेण मन्त्रक्रम उक्तः ।। 142 - 151 ।।

तं. सं.- क्रमे विपर्ययेणात्र शक्त्यादित्वं प्रकीर्तितम् ।
ऋषिच्छन्दोदेवताङ्गध्यानानुक्तौ प्रधानवत् ।
ज्ञेया मन्त्राः समस्तास्ते पृथङ्मोक्षादिदायकाः ।। 152
तन्त्रमार्गास्तु हरिणा ह्यसङ्ख्याः कीर्तिता अपि ।
तेष्वयं सुगमो मार्गः सुफलश्चानुतिष्ठताम् ।। 153
यावतो ह्यननुष्ठाने कर्मपूर्तिर्न विद्यते ।
तावत्समस्तं कथितमस्मिंस्तन्त्रे यथाविधि ।। 154
प्रीयतेऽनेन मार्गेण पूजितो मुक्तिदो भवेत् ।
कामदश्च स्वभक्तानां भगवान् पुरुषोत्तमः ।। 155।।

।। श्रीमदानन्दतीर्थभगवत्पादाचार्यप्रणीते तन्त्रसारसङ्ग्रहे तृतीयोऽध्यायः समाप्तः ।।

क्रमन्यासे मन्त्रक्रममाह - अत्र इति । क्रम इत्यर्थः । तेषां ऋष्यादिकं किमित्यत उक्तिलाघवायविशिष्टं गायत्र्यादिसर्वमन्त्राणाम् आह - ऋषि इति । प्रधानवत् । अष्टाक्षरवत् । योगदीपिकायां कृद्धोल्कादिभिः मन्त्राणां न्यासकथनात् । ननु प्रतिष्ठाप्रकारादीनां पञ्चरात्रादिष्वतिविस्तरेणोक्तत्वात् कथमत्यल्पमेवोक्तम् समग्रफलाप्राप्तेः

इत्यत आह - तन्त्र इति । अपि यद्यपि । तथपि इति शेषः । तथापि अस्मदुक्तोऽयं मार्ग अनुत्तिष्ठतां पुंसां तेषु सङ्कुचितत्वेन सुगम अथ च सुफलश्चातो न दोषः । ननु सङ्कुचितत्वे समग्रक्रियानुष्ठानाभावात् (क)थं सुफलत्वम् इत्यत आह - यावत इति । सुफलत्वं विवृणोति प्रीयत इति ।। 158 - 162।।

।। इति श्रीमत्तन्त्रसारसङ्ग्रहगूढार्थसङ्ग्रहटीकायां विट्ठलाचार्यतनूजेन श्रीनिवासाचार्येण विरचितायां तृतीयोऽध्यायः ।।

# ।। चतुर्थोऽध्यायः ।।

अथास्मिन्नध्याये 'तत्तन्मूर्तिमनुम्' इति (तं.सा.सं. 3.101) प्रतिमाप्रकरणे प्रकृतानां मन्त्राणामतिगोप्यत्वात् सङ्केतेनोद्धर्तुं प्रतिज्ञां करोति - **अथ इति** ।

**अथ विष्णूदिते तन्त्रसारे मन्त्रगणो हि यः ।**
**उदितः सङ्ग्रहेणासावुच्यतेऽखिलसाधकः ।। 1 ।।**

अस्मिन् कल्पे वराहावतारस्य प्राथमिकत्वेन प्रथमतः त्रयस्त्रिंशदक्षरं वराहमन्त्रमाह - **याष्टम इति** ।

(भूवराहमन्त्रः)

**याष्टमस्तूयुतोऽन्तेन समेतश्चैव भूभृतः ।**
**बीजं नमश्च भगवान् सोद्देशो रूपसंयुतः ।। 2 ।।**
**स एव तादृशो लोकत्रयपालो भुवः पतेः ।**
**भावं मे देहि दान्ते तु दापय स्वाहया युतः ।। 3 ।।**

यस्य यकारापेक्षयाष्टमो यो वर्णो हकारः स तु उकारेण युतः अन्तेन बिन्दुना समेतः भूभृतो वराहस्य बीजम् । अत्र बीजस्य बिन्दु-समेतत्वकथनेन वक्ष्यमाणसर्वबीजानामपि बिन्दुसमेतत्वं द्रष्टव्यम् । तदुपरि नमश्शब्दः सर्वत्र क्रमेणोत्तरत्र वक्ष्यमाणाः सर्वे शब्दा उपर्यु-परीति ज्ञातव्याः । 'भगवान्' भगवच्छब्दः । स च सोद्देश्यश्चतुर्थी-विभक्त्युपेतः । एवमुत्तरत्रापि । रूपसंयुतः तादृशः स एव रूपशब्द सहितः सोद्देशः वराह एव । वराह शब्द एवेति यावत् । लोकत्रयपालः एतदर्थप्रतिपादकः भूर्भुवःस्वः पतिरिति शब्दस्तादृशश्चतुर्थ्यन्त इत्य-नुवर्तते । भुवः पतेः भावम् इत्यर्थकं भूपतित्वम् इति पदं मे देही-त्यतः परं दाकार इति ग्राह्यम् । दान्त इति वक्ष्यमाणत्वात् । 'दान्ते'

दकारस्यान्ते दापय स्वाहया दापय स्वाहा इति पदेन युतो वराहमनुरित्यर्थः । तथा चैवं मन्त्रनिष्पत्तिः - ॐ हूं नमो भगवते वराहरूपाय भूर्भुवःस्वःपतये भूपतित्वं मे देहिददाप(य) स्वाहा इति ।

वराहमन्त्रत्रये त्रयस्त्रिंशद्वर्णस्याद्यस्यानुष्टुप् । अष्टाक्षरयुतस्य द्वितीयस्य गायत्री । चतुर्दशाक्षरस्य तृतीयस्यापि गायत्री । 'न वा एकेनाक्षरेण न द्वाभ्याम्' इति वचनादिति ध्येयम् ।। 2, 3 ।।

(वराहसप्ताक्षरः, वराहचतुर्दशाक्षरश्च)

मनुस्तस्यापरो नाम बीजोद्देशनमोयुतः ।
नमः सोद्देशभगवान् महाशब्दयुतश्च सः ।
तादृशः स्वाहाया युक्तो वराहस्यापरो मनुः ।। 4 ।।
श्यामः सुदर्शनदराभयसद्वरेतो
भूम्या युतोऽखिलनिजोक्तपरिग्रहैश्च ।
ध्येयो निजैश्च तनुभिः सकलैरुपेतः
कोलो हरिः सकलवाञ्छितसिद्धयेऽजः ।। 5 ।।
वैष्णवानां मुनिर्ब्रह्मा मन्त्राणां वर्णभेदतः ।
ज्ञेयं छन्दो देवतैकस्तत्तद्रूपो हरिः परः ।। 6 ।।
प्रणवेन स्वनाम्ना च भूधरेण परात्मना ।
सर्वज्ञसर्वशक्तिभ्यां षडङ्गानि विदो विदुः ।। 7 ।।
ज्ञानैश्वर्यप्रभानन्दतेजःशक्तिभिरेव च ।
पूर्णात्ममध्यगैः सर्ववैष्णवाङ्गान्यथो विदुः ।। 8 ।।

तस्यैव सप्ताक्षरमपरं मन्त्रमाह - तस्य इति । नामभूतवराह शब्देन बीजेनोद्देशेन नमः शब्देन युक्तस्तस्यापरो मनुरित्यर्थः । इत्थं मन्त्रनिष्पत्तिः - हुं वराहाय नम इति । तस्यैव चतुर्दशाक्षरं मन्त्रान्तर-

माह - **नमः स इति** । स वराहः वराहशब्द इति यावत् । एवं च 'नमो भगवते महावराहाय स्वाहा' इति मन्त्रः । 'ध्यानहीने तु निष्फलम्' इत्युक्तेः ध्यानमाह - **श्याम इति** । सुदर्शनदरेत्यनेन बाहुचतुष्टययुक्तत्वमुक्तं भवति । अखिला निजाः स्वीयाः प्रागुक्ता एव परिग्रहाः लक्ष्मीधरानन्तब्रह्मवाय्वादयस्तैरित्यर्थः । निजैस्तनुभिः कृद्धोल्कादिभिर्विश्वरूपान्तैः । एतेन सकलावरणदेवतासमेतत्वमुक्तं भवति । ऋष्यादिज्ञानस्यावश्यकत्वेन ऋष्यादिकं सर्ववैष्णवमन्त्राणामपि आह - **वैष्णवानाम् इति** । **वर्णभेदतः** । वर्णसङ्ख्याभेदतः । गायत्र्यादिजगत्यन्तानां चतुरुत्तरत्वेन इति भावः । न्यासमन्त्रानाह - **प्रणवेन इत्यादिना** । स्वनाम्ना स्वानामभूतेन वराहशब्देन सोद्देशेन इति ग्राह्यम्। तथोक्तं परस्तात् । एवं भूधरेण इत्यादावपि सर्ववैष्णवमन्त्रसाधारणाङ्गन्यासमन्त्रानाह - **ज्ञान इति** । पूर्णात्मशब्दयोर्मध्यगतैः सोद्देशैर्ज्ञानादिभिः शब्दैः सर्ववैष्णवमन्त्राणां अङ्गानि न्यसनीयानि । विदुर्ज्ञानिन इति शेषः । एवं च पूर्णज्ञानात्मन इत्यादि प्रकारेण मन्त्रसिद्धिः ।। 4 - 8 ।।

(श्रीकरमन्त्रः)

**तिष्ठोदादिः स्वजायायाः कारणं स्वाहया युतः ।**
**श्रीकरोऽष्टाक्षरो मन्त्रो गरुडारूढसंस्मृतिः ।। 9 ।।**
**द्विर्भीषय त्रासय च प्रमर्दय तथैव च ।**
**प्रध्वंसयाथो रक्षेति पञ्चाङ्गश्चेदुदाहृतः ।। 10 ।।**

श्रीकरमन्त्रमाह - **तिष्ठ इति** । उदिति शब्द एवादौ यस्य स उदादिः । तिष्ठ इति शब्दः । हरिस्तस्य जाया श्रीः तस्याः कारणम् इत्यर्थकश्रीकरशब्द इति यावत् । छन्दोनियमार्थमक्षरसङ्ख्यामाह - **अष्टाक्षर इति** । एवमुत्तरत्राप्यक्षरसङ्ख्याकथनस्य इदमेव प्रयोजनम् इति ज्ञातव्यम् । तथा च 'उत्तिष्ठ श्रीकर स्वाहा' इति मन्त्रनिष्पत्तिः।

एतत्फलमाह - **श्रीकर इति** । सम्पत्कर इत्यर्थः । ध्यानमाह - **गरुड इति** । कर्तव्य इति शेषः । न्यासमन्त्रमाह - **द्विरिति** । द्विः द्विवारं उच्चरितो भीषयेतिशब्द इत्यर्थः । त्रासयेत्यादावपि द्विरिति संबध्यते। **पञ्चाङ्गश्चेत् इति** । षडङ्गश्चेज्ज्ञानैश्वर्य इत्यादिना कथित इति भावः ।। 9, 10 ।।

(आनुष्टुभनृसिंहमन्त्रः)

**क्रूरं वीरं बृहद्विष्णुं दीप्यन्तं विश्वतोमुखम् ।**
**पुंमृगेन्द्रं भयकरं शुभं मृत्योश्च मारकम् ।**
**नमामि स्वयमित्येव द्वात्रिंशार्णो मनुर्हरिः ।। 11 ।।**

नृसिंहमन्त्रस्य च अयं न्यास इति ज्ञेयम् । नृसिंहमन्त्रमाह - क्रूरम् इति । क्रूरमित्यर्थक उग्र इति पदम् । बृहद्विष्णुम् । बृहदित्यर्थकपदोपेतं विष्णुपदम् । महाविष्णुम् इति यावत् । दीप्यन्तम् । एतदर्थकं ज्वलन्तम् इति पदं विश्वतोमुखम् इत्यर्थाभिधायकं सर्वतोमुखम् इति पदम् । पुंमृगेन्द्रम् । पुरुषवाचकपदोपेतमृगेन्द्रवाचकपदम् । नृसिंहपदं इति यावत् । 'भयङ्करम्' तदर्थकं भीषणम् इति पदम् । 'शुभम्' तत् पर्यायं भद्रपदम् । 'मृत्योश्च मारकम्' तदर्थप्रतिपादकमृत्युमृत्युम् इति पदम् । स्वयमित्यर्थकोऽहमिति शब्द उक्तैकादशपदयुक्तो हरेः नृसिंहस्य मनुरित्यर्थः । एवं मन्त्रनिष्पत्तिः-

**उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम् ।**
**नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम् ।।**

इति ।। 11 ।।

(चतुर्विंशाक्षरो नृसिंहमन्त्रः)

**द्विर्जस्योपरि निजं सोद्देशं सर्ववित्तथा ।**

**महातेजो बलं वीर्यं तादृशं स्वाहया युतम् ।**
**चतुर्विंशाक्षरो मन्त्रो निखिलेष्टप्रदायकः ।। 12 ।।**

तस्यापरं मन्त्रमाह - **द्विरिति** । द्विवारमुच्चरितस्य जपेति पदस्योपरि सोद्देशं निजं स्वनामभूतं नरसिंहपदं सर्वविदित्यर्थाभिधायकं सर्वयज्ञपदम् । तादृशं सोद्देशम् । महातेजोबलवीर्यप्रदं तादृशं सोद्देशमेतत्पदसमुदायात्मको मन्त्र इत्यर्थः । तथा च इत्थं मन्त्रः - 'जय जय नृसिंहाय सर्वज्ञाय महातेजोबलवीर्याय स्वाहा' इति ।

(नृसिंहगायत्रीमन्त्रः)

**विद्महे धीमहेपूर्वं स्वयञ्चैव महाबलः ।**
**प्रेरयेत्तन्न इत्येतन्मध्येऽनन्तः प्रकीर्तितः ।। 13 ।।**
**पादैर्व्यस्तैः समस्तैश्च पदैश्चाङ्गं प्रकीर्तितम् ।**
**पूर्वयोस्तत्र पूर्वन्तु सर्वज्ञेन षडङ्गकम् ।**
**तृतीयं तु द्विरावृत्तैः पादैरङ्गसमन्वितम् ।। 14 ।।**
**ध्यायेन्नृसिंहमुरुवृत्तरवित्रिनेत्रं**
**जानुप्रसक्तकरयुग्ममथापराभ्याम् ।**
**चक्रं दरं च दधतं प्रियया समेतं**
**तिग्मांशुकोट्यधिकतेजसमग्र्यशक्तिम् ।। 15 ।।**

तद्गायत्रीमप्याह - **विद्महे इति** । विद्महे धीमहे इत्यनयोः पदयोः पूर्वं क्रमेण स्वयं नामभूतो नृसिंह शब्दः । चशब्दात् सोद्देश इति लभ्यते । तादृश एव महाबलशब्दश्च तन्नः प्रेरयेद् इत्यर्थकप्रचोदयाद् इति पदयोर्मध्येऽनन्तशब्दः प्रकीर्तित इति सम्बन्धः । तथा चैवं गायत्री। **'नरसिंहाय विद्महे महाबलाय धीमहि तन्नोऽनन्तः प्रचोदयात्'** इति। आद्यद्वितीयमन्त्रयोः अङ्गन्यास मन्त्रमाह - **पादैरिति** । क्रमेणेति शेषः। अत्रोग्रमित्यस्य पादैः व्यस्तैः । जय जयेत्यस्य तु पादैः इति विवेकः।

आद्यस्य षडङ्गत्वसिद्ध्यर्थम् अपरं मन्त्रमाह - **तत्र इति** । तृतीयस्याह - **तृतीयम् इति** । ते च ते तद्द्विरावृत्ताश्च तैरित्यर्थः । **उरुवृत्तेति** । उरूणि वृत्तानि रविवद्दीप्तानि नेत्राणि यस्य तम् । रविवद्वृत्तनेत्रम् इति । **जानु प्रसक्तेति** । जानौ प्रसक्तं स्थापितं हस्तयुग्मम् ।। 13 - 15 ।।

अत्र सर्वत्र द्विभुजत्वादिकं उपलक्षणमित्याह - **सर्वेष्वित्यादिना**।

**सर्वेष्वपि हि मन्त्रेषु द्व्याद्यनन्तान्तबाहुकः ।**
**चेतनान्तस्थमारभ्य सर्वगान्तस्वरूपवान् ।। 16 ।।**
**अनन्तरूपो ध्येयोऽत्र स्वगुरूक्तानुसारतः ।**
**यथायोग्यं यथाशक्ति तत्तदायुधभूषणः ।। 17 ।।**
**शङ्खचक्रगदापद्मखड्गखेटाः सशार्ङ्गकाः ।**
**शरो मुसलवज्रौ च हलः पाशांकुशौ तथा ।। 18 ।।**
**शूलं च भिण्डिपालश्च पट्टिशोऽग्निर्वराभये ।**
**तर्कमुद्राक्षमाला च पुस्तकं च विदारणम् ।**
**इत्यादीन्यखिलान्येव विष्णोश्चिन्त्यानि बाहुषु ।। 19 ।।**

**(षडक्षरो हंसमन्त्रः)**

**वियत्स इति युग्मार्णो विपरीतश्च स स्मृतः ।**
**स सर्गहीनो वेतश्च बिन्दुहीनोत्तरस्तथा ।। 20 ।।**
**त्रय एते महामन्त्राः पुरुषार्थचतुष्टये ।**
**कल्पवृक्षाः प्रिया विष्णोर्विशेषज्ञानदायकाः ।। 21 ।।**
**तैरेव तु द्विरावृत्तैरङ्गमेषां प्रकीर्तितम् ।**
**श्वासरूपो जपो नित्यमुभयोर्विद्वदज्ञयोः ।। 22 ।।**

**सर्वगान्तस्वरूपवान्** । सर्वेष्वव्याकृताकाशादिषु गतं व्याप्तम् रूप-

मेवान्तं चरमं यस्य स्वरूपस्य तदस्यास्तीति सर्वगान्तस्वरूपवान् । तथा च जीवान्तर्गतमिति सूक्ष्मं रूपमारभ्य ततोऽपि ईषदधिकं ततोऽपि ततोऽपि इत्यादिक्रमेण (अव्याकृताकाश)पर्यन्तं विद्यमानानेकपरिमाणवत्वेन भगवान् ध्येय इति भावः । एतदुपलक्षणम् । एवमनन्तरूपमित्यत्राऽपि एकं रूपमारभ्य अनन्तान्तरूप इति द्रष्टव्यम् । नन्वेतत् सर्वमपि सर्वाधिकारिकं किं नेत्याह - **यथायोग्यम्** इति । योग्यताया सम्यग्व्यक्त्यभावदशायां कथमित्यत आह - **यथाशक्ति इति** । स्वस्यैतावदंशे योग्यता वर्तत इति कथं ज्ञातव्यम् । प्रथमतश्च तज्ज्ञानं च कथं भवति इत्यत आह - **स्वगुरूक्तेति** । योग्यताभिज्ञगुरूपदेशानुसारेण रूपं ध्येयमित्यर्थः । तत्तदायुधभूषण इत्युक्तं विवृण्वन् लेशतो दर्शयति - **चक्रेत्यादिना** । आदिपदेन शक्तिप्रासामृतवस्त्रादीनां ग्रहणम् ।। 16 - 19 ।।

मालारूपं हंसमन्त्रम् आह - **वियत् इति** । अत्र वियत् शब्देन हकार उच्यते । स च बिन्दुसहित इति द्रष्टव्यम् । बिन्दुविहीन इति वक्ष्यमाणत्वात् । सः विसर्गसहितः सकारः । सः हंस इति अक्षरद्वयात्मको मन्त्रः । विपरीतक्रमोच्चारितश्चेत् सोऽहम् इति द्वितीयमन्त्रः । सकारः सर्गेणविसर्गेण हीनः वेतः वकारेण युक्तश्च उत्तरः उपरि स्थितो हकारः । बिन्दुहीनश्च तथा स्वाहा इति तृतीयमन्त्रः । स्मृत इत्यर्थः । एतेषु मन्त्रेषु पूर्वं कञ्चन विशेषमाह - **श्वास इति** ।। 20 - 22 ।।

**(सप्ताक्षरो हंसमन्त्रः)**

**एकविंशत्सहस्रात्मा सषट्शतमहर्निशम् ।**<br>**अर्पणीयो हरौ नित्यं प्रातर्योगो महानयम् ।। 23 ।।**<br>**अशेषदोषदहनस्तत्त्वज्ञानप्रदायकः ।**<br>**अष्टैश्वर्यप्रदश्चैव कृतादौ समुपासताम् ।**

**तारयोगोऽप्येवमेव ब्रह्मादावेव वर्तते ।। 24 ।।**

अज्ञज्ञानिनोः उभयोरपि नित्यं प्रतिदिनं श्वासरूप एतन्मन्त्रो वर्तत इत्यर्थः । प्रतिदिनं क्रियमाणः जपः कियत् सङ्ख्याक इत्यत आह - **एक इति** । अ(ह)र्निशं इत्यव्ययम् । विद्वदज्ञयोः इत्युक्तम् । तर्हि उभयोरपि जपप्रयुक्तफलं भवति किमित्यतो ज्ञानिनामेव तद् भवति न अन्येषाम् इत्याशयेन ज्ञानिनां तत्फलप्राप्तौ उपायमाह - **अर्पणीय इति** । प्रातर्योग इति हंसमन्त्रस्य संज्ञा । उक्तं च ऋग्भाष्ये 'प्रातर्योगेन' इति । 'प्रातर्योगेन' 'हंसमन्त्रेणे'ति तट्टीकोक्तेः । तथा च महाफलप्रदोऽयं प्रातर्योगः । श्वासरूपहंसमन्त्रो नित्यं हरावर्पणीयः अतो महाफलप्रापक इति भावः । महत्त्वमेव विशदयति - **अशेष इति** । ननु अत्रोक्त अणिमादिफलं सर्वयुगेष्वपि भवति किमित्यत नेत्याह - **कृतादौ इति** । त्रेताद्वापरावादिशब्देन गृह्येते ।

**(भारततात्पर्यनिर्णयविरोधपरिहारः)**

ननु एकैकस्मिन् दिवसे श्वासरूपहंसमन्त्रजपस्य षट्शतैकविंशत्-सहस्रसङ्ख्याकत्वम् उक्तम् । न च तद्युक्तम् । भारततात्पर्यनिर्णय-विरोधात् । तथा हि 'द्वादशाब्दमभूत्तेन तदहः केशवाज्ञया' इत्ये-कस्यैवाह्नो द्वादशराशिषु गुरुसञ्चारेण द्वादशाब्दरूपत्वमभिधाय 'मास-व्रतं सार्धशतश्वासकालैरकल्पयत्' इति राशिषु चतुश्चत्वारिंशदधिक-शतमासानां व्रतसिध्यर्थं पञ्चाशदधिकशतकालस्य मासरूपत्वमुक्तम्। तथा च 'श्वासकालैरकल्पय'दिति चतुश्चत्वारिंशदधिकशतमासानां व्रतसिध्यर्थं पञ्चाशदधिकशतकालस्य मासरूपत्वमुक्तम् । तथा च श्वासगणने क्रियमाणे सति एकस्मिन् अह्न्येव सषट्शतैकविंशत्स-हस्रसङ्ख्या पूर्णा भवति । एवं चात्राहर्निशमित्यहोरात्रात्मकदिवसे क्रियमाणस्य श्वासरूपजपस्य तावत्सङ्ख्याकत्वोक्तौ तद्विरोधः स्यादेवेति चेन्न । तात्पर्यनिर्णये अहःशब्देन अहोरात्रात्मकदिवसस्यैव गृहीत-त्वात् । अहःशब्दस्य अहोरात्रात्मकदिवसपरत्वस्य 'पञ्चदशाहानि

मासाः' 'दशाहेन तु कर्कन्धुः'(भा.3.31.2) इत्यादि श्रुतिस्मृतिसिद्धत्वात् इति । तारयोग इति । तारेण योगः सम्बन्धः यस्य मन्त्रस्योक्तः स तारयोगः । स एवमेव पृथक् मन्त्र एव उक्ताशेषफलकस्त्विति । नायं चतुर्थो मन्त्रः सर्वाधिकारिक इत्याह - ब्रह्मादाविति ।। 23-24 ।।

ध्यायेद्रवीन्दुकरमिन्दुसहस्रलक्षकान्तिं
प्रियासहितमास्थितमिन्दुबिम्बे ।
शङ्खारिदोर्द्वयमुदर्कमहेन्दुबिम्बात्
संसिच्यमानममृतेन रमाधिनाथम् ।। 25 ।।

(अष्टाक्षरो हंसमन्त्रः)

अन्त्यस्य रक्तवर्णो वा ध्येयो विष्णुः सनातनः ।
विद्युद्वर्णोऽथवा ध्येयः शक्त्येतः पञ्चमन्त्रयुक् ।। 26
अष्टाक्षरो महामन्त्रस्तैरेवाङ्गैः समन्वितः ।
अन्त्यध्यानयुतश्चैव निःशेषपुरुषार्थदः ।। 27 ।।

उदर्कमहेन्दुबिम्बात् । उपर्यवशिष्टमहाचन्द्रमण्डलैकदेशात् । अन्त्यस्य चतुर्थमन्त्रस्य । पञ्चमहंसमन्त्रमाह - शक्ति इति । शक्ति शब्देन ह्रीमिति शब्द उच्यते तद्युक्तोऽयं पूर्वमेव समुदायः पञ्चममन्त्रत्वेन युक् इत्यर्थः । एवं च इत्थं पञ्चममन्त्रनिष्पत्तिः । ॐ ह्रीं हंसः सोऽहं स्वाहा इति । एतैः पञ्चभिर्मन्त्रैः अन्त्यध्यानेन चतुर्थमन्त्रस्य यत् ध्यानं अर्कवर्णेत्यादिकं तेन युक् इत्यर्थः ।। 26 - 27 ।।

(दधिवामनमन्त्रः)

मूलं नः प्रतिषेधश्च सोद्देशो भगवानपि ।
विष्णुर्भोज्याधिपः स्वाहायुक्तोऽष्टादशवर्णकः ।। 28 ।।

अङ्गानि तत्पदैरेव मन्त्रचिन्तामणिस्त्वयम् ।
यथेष्टभक्ष्यभोज्यादिदाता मुक्तिप्रदायकः ।। 29 ।।
ध्यायेत्सुशुक्लमरविन्ददलायताक्षं
सौवर्णपात्रदधिभोज्यमथामृतं च ।
दोर्भ्यां दधानमखिलैश्च सुरैः समेतं
शीतांशुमण्डलगतं रमया समेतम् ।। 30 ।।

मूलं दधिवामन मन्त्रमाह - मूलम् इति । ॐकारः । नः नंकारः। प्रतिषेधः । प्रतिषेधार्थको मकारः विष्णुरित्यादौ सोद्देश इत्यनुवर्तते । भोज्याधिपो भोज्याधिप इत्यर्थको अन्नाधिपतिशब्दः । इत्थं च मन्त्रनिष्पत्तिः । ॐ नमो भगवते विष्णवे अन्नाधिपतये स्वाहा इति । सौवर्णेति । सौवर्णपात्रे स्थितं दधि भोज्यं दधिमिश्रमन्नमित्यर्थः । यत्रेत्यस्याधिकरणसप्तमीत्वेन स्थितमिति लभ्यते ।। 28 - 30 ।।

(अष्टाक्षरो वामनमन्त्रः)

अमृतं स्वयमुद्देशयुक्तः सहृदयो मनुः ।
सतारोऽष्टाक्षरोऽङ्गानि पदैर्व्यस्तैः समस्तकैः ।। 31 ।।
उद्यद्रविप्रभमरीन्द्रदरौ गदां च
ज्ञानं च बिभ्रतमजं प्रियया समेतम् ।
विश्वावकाशमभितः प्रतिभासयन्तं
भासा स्वया स्मरत विष्णुमजादिवन्द्यम् ।। 32 ।।

वामनमन्त्रमाह - अमृतमिति । अमृतबीजं वमित्येतत् । स्वयं स्ववाचको वामन शब्दः । सहृदयः स नमः शब्दः । ॐवं वामनाय नमः इति मन्त्रनिष्पत्तिः ।। 31 - 32 ।।

(त्रिविक्रमगायत्रीमन्त्रः)

त्रिविक्रमस्तु सोद्देशो विश्वरूपश्च तत्परः ।
धीविदौ च महे विष्णुस्तन्नःप्रेरणमध्यगः ।। 33 ।।

त्रिविक्रमगायत्रीमाह - त्रिविक्रम इति । सोद्देशः त्रिविक्रम शब्दः तत्परः तदनन्तरस्थितो विश्वरूपशब्दः । चशब्दः सोद्देश इत्यनुकर्षणार्थः। तदुपरि क्रमेण धीशब्दवितृशब्दौ तयोरुपरि महे इति शब्दः । तन्नः प्रेरणमध्यगः । प्रेरणशब्देन प्रचोदयादिति पदयोर्मध्ये स्थितो विष्णुशब्दः च तदुपरि इत्यर्थः । इत्थं गायत्री निष्पन्ना । त्रिविक्रमाय विद्महे विश्वरूपाय धीमहि । तन्नो विष्णुः प्रचोदयात् इति ।। 33 ।।

(परशुराम-दाशरथिरामषडक्षरमन्त्रः)

स्वयमुद्देशसंयुक्तस्तदाद्यर्णपुरःसरः ।
सनतिः षडक्षरो मन्त्रो वर्णैरङ्गक्रिया मता ।। 34 ।।
अङ्गारवर्णमभितोऽण्डबहिः प्रभाभि-
व्याप्तं परश्वधधनुर्धरमेकवीरम् ।
ध्यायेदजेशपुरुहूतमुखैः स्तुवद्भि-
रावीतमात्मपदवीं प्रतिपादयन्तम् ।। 35 ।।
श्यामं रवीन्द्वमितदीधितिकान्तियुक्तं
ज्ञानं शरं च दधतं प्रियया समेतम् ।
स्वात्मस्वरूपममितं हनुमन्मुखेषु
सन्दर्शयन्तमजितं स्मरतोरुगीर्भिः ।। 36 ।।

परशुरामराममन्त्रौ युगपदाह - स्वयम् इति । स्वयं नामभूतो रामशब्दः तस्य यो प्रथमवर्णः रा इति स च बीजत्वेन सबिन्दुरिति

द्रष्टव्यम् । तत् पुरस्सरः स्रः सनतिः नमः शब्दयुक्तः । एवं चेत्थं मन्त्रयोः निष्पत्तिः । रां रामाय नमः इति । अभितः अण्डे अभितः अण्डबहिश्चाभितः सर्वत्र आवीतं परिवीतं आत्मपदवीं स्वस्थानं स्वरूपम् इति यावत् । अमितमपरिच्छिन्नं सर्वैरज्ञातमिति वा । अज्ञान इति धातोः । गीर्भिः दर्शयन्तमित्यन्वयः । यद्वा वेदवचनैः स्वरभेदार्थविचारपूर्वकं तदुक्तगुणवत्वेन स्मरणं कुरुध्वमिति भावः ।।34-36।।

तयोरपरौ मन्त्रौ आह - निज इति ।

(भार्गवमन्त्रद्वयं तथा राघवमन्त्रद्वयम्)

निजगोत्रन्तु सोद्देशं पूर्वाक्षरपुरःसरम् ।
नत्यन्तं तारपूर्वं च मनुरष्टाक्षरो मतः ।। 37 ।।
ते च बीजे बीजभूते धर्मादीनामशेषतः ।
एते विजयदा मन्त्रा ज्ञानमोक्षप्रदायकाः ।
हिरण्यरत्नराज्यादिसमभीष्टसुरद्रुमाः ।। 38 ।।

निजगोत्रम् । निजगोत्रप्रतिपादकम् । भार्गवराघवेतिपदं तत्र पूर्वाक्षरपुरःसरं भा(रा) इत्येतद्वर्णपूर्वकं एव चैवं निष्पन्नौ मन्त्रौ - ॐ भां भार्गवाय नमः ॐ रां राघवाय नमः इति । ते बीजं भां रां इत्येते बीजभूते कारणभूते ।। 37 - 38 ।।

(अष्टादशाक्षरकृष्णमन्त्रः)

कृष्णो गोविच्च कामेतः सोद्देशो बल्लवीजनः ।
प्रियश्च तादृशः स्वाहायुक्तोऽष्टादशवर्णकः ।
पदैरङ्गानि सम्प्रीतिकाममोक्षप्रदो मनुः ।। 39 ।।
ध्यायेद्धरिन्मणिनिभं जगदेकवन्द्यं
सौन्दर्यसारमरिशङ्खवराभयानि ।

दोर्भिर्दधानमजितं सरसं च भैष्मी-
सत्यासमेतमखिलप्रदमिन्दिरेशम् ।। 40 ।।

कृष्णमन्त्रमाह - **कृष्ण इति** । कामतः । अत्र कामशब्देन कामार्थकं क्लीम् इति बीजमुच्यते । तद्युक्तः सोद्देशः कृष्णशब्दः । **गोवित्**। गोभिर्वेदैर्वेद्यत इति गोवित् । एतदर्थको गोविन्दशब्द इति यावत् । अत्रापि सोद्देशपदं सम्बध्यते । वल्लवीजन प्रियः । वल्लवी शब्देन तत्पर्यायभूतगोपीशब्दो विवक्षितः । प्रियशब्देन तत्पर्यायो व(ल्ल)भ शब्दः । स तादृशः सोद्देश इत्यर्थः । तथा चैवं निष्कृष्टो मन्त्रः । क्लीं कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा इति । **सौन्दर्यसारम् इति** । सौन्दर्येण सार उत्तमः । 'रसः सारो वरश्चेति शब्दाः पर्यायवाचका' इत्युक्तेः **सरसमिति** । समीचनरसो रागः । स्नेह इति यावत् । स यथा तया युक्तम् इत्यर्थः । सम्यक् सर्वोत्तमम् इति वा। रसशब्दस्य दयार्थत्वात् (सहितैः इत्यर्थः) सरसम् इति पाठे तु रसेन दयया ।। 39 - 40 ।।

(षडक्षरैकाक्षरकृष्णमन्त्रौ)

सकामः स्वयमुद्देशी नत्यन्तोऽयं षडक्षरः ।
तदादिरपि सर्वेष्टचिन्तामणिरुदाहृतः ।। 41 ।।
दृष्टार्थ एव मन्त्राणां कलौ वीर्यं तिरस्कृतम् ।
तत्राप्युद्दीप्तवीर्या हि मन्त्र अत्र प्रकीर्तिताः ।
वासिष्ठवृष्णिप्रवरमन्त्रास्तत्रापि वीर्यदाः ।। 42 ।।

(अष्टाक्षरः वेदव्यासमन्त्रः)

स्वयं वेदपदारूढः पूर्ववर्णपुरःसरः ।
नत्यन्तोऽष्टाक्षरो मन्त्रः प्रियो विज्ञानगोपतेः ।।43 ।।

**व्याख्याश्रीसर्वविज्ञानकवितादिगुणप्रदः ।**
**वादे विजयदो नित्यं यथा युद्धे नृकेसरी ।। 44 ।।**
**विज्ञानरोचिःपरिपूरितान्तर्बाह्याण्डकोशं हरितोपलाभम् ।**
**तर्काभयेतं विधिशर्वपूर्वगीर्वाणविज्ञानदमानतोऽस्मि ।। 45।।**

तस्यैव अपरं मन्त्रमाह - **सकाम इति** । उद्देशी उद्देशयुक्तः । स्वयं वाचकः । कृष्णाय नमः इति मन्त्रः । **तदादिरिति** । तस्य मन्त्रस्यादौ स्थितः क्लीम् इति शब्द इत्यर्थः । वेदपञ्चरात्रोक्त-सर्वमन्त्रापेक्षया प्रोक्ता एव मन्त्रा उत्तमाः । तत्राऽपि कृष्णादिमन्त्राः श्रेष्ठा इत्याशयेन मन्त्रफलभूतैकपुरुषार्थविषये सामान्य न्यायमाह - **दृष्टेति** । अपवादमाह - **तत्राऽपि इति** । कलियुगे अपि इत्यर्थः । अत्र चतुर्थाध्याये प्रथमाध्यायोक्तमन्त्राणाम् एतेषु मूलमन्त्राणां 'मूलमन्त्रा विशेषत' इत्यादिना सर्वतोप्याधिक्यस्य सिद्धत्वात् वासिष्ठेति । वेदव्यासकृष्णमन्त्रा इत्यर्थः ।

तत्र चतुर्थाध्यायोक्तमन्त्रेषु प्रकृतं वेदव्यासमन्त्रमाह - **स्वयम् इति** । वेदपदारूढः वेदपदोपरि स्थितः । स्वयं नामभूतो व्यासशब्दः स चतुर्वर्णभूत इति **वर्णपुरःसरः** । अत्रनत्त्यन्तत्त्वकथनेन व्यासशब्दः सोद्देश इति लभ्यते । तथा चैवं मन्त्रनिष्पत्तिः - व्यां वेदव्यासाय नमः इति । [1]विज्ञानात्मक ---- सर्ववेदाधिनाथश्च तस्येत्यर्थः । **स्वर्गेषु** पशुवाग्वा च इति गोशब्दस्य वाक्यपरत्वात् । यद्वा विज्ञानात्मककिरणानां पतेः किरणयुक्तस्य इति भावः । **नृकेसरी** । नृकेसरिमन्त्रः । **विज्ञानेति**। विज्ञानात्मकरोचिभिः परिपूरितम् अन्तर्बाह्यसहितं अण्डकोशं यस्य स तथोक्तम् ।। 41-45 ।।

---

1. अत्र ग्रन्थपातः अस्पष्टता च दृश्यते ।

(व्यासगायत्रीमन्त्रः)

ज्ञानानन्दपुरः पूर्णो विद्महे धीमहे तथा ।
तन्नःप्रेरणमध्ये तु व्यासो मन्त्राधिपाधिपः ।। 46 ।।

(एकाक्षरः व्यासमन्त्रः)

आदिबीजं स्थिराशेषज्ञानबीजं विमुक्तिदम् ।
सर्वपापक्षयकरं सर्वव्याधिविनाशनम् ।। 47 ।।
ध्यायेच्छशाङ्कशतकोट्यतिसौख्यकान्तिं
संसिच्यमानममृतोरुघटैः सुरेशैः ।
वर्णाभिमानिभिरजेशमुखैः सहैव
पञ्चाशता प्रतिगिरन्तमशेषविद्याः ।। 48 ।।

तद् गायत्रीमाह - ज्ञानेति । ज्ञानानन्दशब्दयोः पूर्वं पूर्णशब्दः । तौ सोद्देशाविति ग्राह्यम्। तयोरुपक्रमेण धीमह विद्मह इति शब्दौ । अत्र तन्नः प्रचोदयाद् इति शब्दयोर्मध्ये व्यासशब्दः प्रयोक्तव्यः । अयं मन्त्रः सर्वमन्त्राणामधिप इत्यर्थः । तथा च इत्थं गायत्री - 'पूर्णज्ञानाय विद्महे पूर्णानन्दाय धीमहि इति तन्नो व्यासः प्रचोदयात्' इति ।। 46 - 48 ।।

(हयग्रीवमन्त्रः)

सोद्देशस्तु स्वयं दीर्घपूर्वार्णाद्यो नमोयुतः ।
सर्वविद्याप्रदोऽष्टार्णः प्रतिवादिजयप्रयः ।
विमुक्तिसाधनः कीर्तिबुद्धिस्थैर्यप्रदः सदा ।। 49 ।।
वन्दे तुरङ्गवदनं शशिबिम्बसंस्थं
चन्द्रावदातममृतात्मकरैः समन्तात् ।

अण्डान्तरं बहिरपि प्रतिभासयन्तं
शङ्खाक्षपुस्तकसुबोधयुताब्जबाहुम् ।। 50 ।।
नस्तो मुखादपि निरन्तरमुद्गिरन्तं
विद्या अशेषत उताब्जभवेशमुख्यैः ।
संसेव्यमानमतिभक्तिभरावनम्रै-
र्लक्ष्म्याऽमृतेन सततं परिषिच्यमानम् ।। 51 ।।

हयग्रीवमन्त्रमाह - **सोद्देश इति** । स्वयं स्ववाचको हयग्रीवशब्दः। दीर्घयुक्तः पूर्वः भूतहकार एव आद्यः यस्य स तथोक्तः । ॐ हां हयग्रीवाय नमः इति । निर्णीतो मन्त्रः ।। 49 - 51 ।।

(कपिलदत्तात्रेयमन्त्रौ)

स्वयमुद्देशवान् पूर्ववर्णपूर्वो नमोयुतः ।
सतारोऽष्टाक्षरश्चैव नवार्णश्च मनू स्मृतौ ।। 52 ।।
प्रोद्यद्दिवाकरसमानतनुं सहस्र-
सूर्योरुदीधितिभिराप्तसमस्तलोकम् ।
ज्ञानाभयाङ्कितकरं कपिलं च दत्तं
ध्यायेदजादिसमितिं प्रतिबोधयन्तम् ।। 53 ।।

कपिलदत्तात्रेयौ युगपदाह । स्ववाचकौ कपिलदत्तात्रयशब्दौ पूर्व-वर्णभूतः ककारो दकारश्च तत् पूर्वः । इत्थं मन्त्रौ ॐ कं कपिलाय नमः। दं दत्तात्रेयाय नमः इति - **सहस्रेति** । अमित (किरणैः) व्याप्तेति । समस्त लोकम् अधृष्यता ज्ञानमोक्षप्रदौ भक्तेष्विमौ सदा ।। 52 - 53 ।।

(चत्वारो वैदिकमन्त्राः)

अधृष्यताज्ञानमोक्षप्रदौ भक्तेष्विमौ सदा ।
सूक्तं दीर्घतमोदृष्टं 'विष्णोर्नुक'मिति प्रभोः ।। 54 ।।
सर्वार्थदं गार्त्समदं 'यो जात' इति चापरम् ।
वासिष्ठं च परो मात्रयेति ज्ञानविमुक्तिदम् ।। 55 ।।
भौवनीयं सर्वकाममोक्षदं 'य इमे'त्यपि ।
एवमेवाखिला वेदा ज्ञातव्या विष्णुतत्पराः ।। 56 ।।

(वैदिको लक्ष्मीमन्त्रः)

स्वदृष्टं सूक्तमखिलं कामदं हरितुष्टिदम् ।
वाचोऽम्भृण्याः श्रियोऽङ्गानि श्रीर्लक्ष्मीर्मेन्दिरा रमा ।। 57
कौशेयपीतवसनामरविन्दनेत्रां
पद्मद्वयाभयवरोद्यतपद्महस्ताम् ।
उद्यच्छतार्कसदृशां परमाङ्कसंस्थां
ध्यायेद्विधीशनुतपादयुगां जनित्रीम् ।। 58 ।।

(लक्ष्म्या एकाक्षरं मन्त्रद्वयम्)

लज्ञाबीजं च तद्बीजं तस्या एवभिधायकम् ।
पाशांकुशौ रक्तवस्त्रे लज्ञाबीजे विशिष्यते ।। 59 ।।

इदानीं वैदिकमन्त्रमाह - सूक्तम् इति । विष्णोर्नुकम् इति वर्गचतुष्टयम् । अत्र द्रष्टृकथनं ऋषिसूचनार्थम् । एवम् उपर्यपि । गार्त्समदं गृत्समदऋषिणा दृष्टम् । यो जात एव प्रथमो मनस्वान् इति सूक्तं वा । वसिष्ठदृष्टम् परो मात्रयेति वर्गद्वयम् । भौवनं विश्वकर्म-दृष्टम् । 'य इमा विश्वे'ति वर्गद्वयम् ।

लक्ष्मीमन्त्रमाह - **स्वदृष्टमिति** । वाचो वाङ्नियामकत्वेन वागाख्यायाः । अं परमात्मानं बिभर्ति इति अम्भ्रिणीनामिकायाः श्रियः यत्स्वप्रतिपादकं स्वदृष्टं अहं रुद्रेभिर्वसुभिरिति वर्गद्वयात्मकं सूक्तं तदखिलकामदं हरितुष्टिदं चेत्यर्थः । **अङ्गानि इति** । श्रीरित्यादीनि पञ्चपदानि अङ्गानि अङ्गन्यासमन्त्रा इति भावः । पद्मद्वयेन अभय-(वरमुद्राभ्यां), च उद्यताः उद्युक्ताः विद्यमानाः चतुः सङ्ख्याकाः हस्ताः यस्या सा तथोक्ता ताम् इत्यर्थः । तस्या अपरौ मन्त्रौ आह - **लज्जा-बीजम् इति** । लज्जार्थकं ह्रीम् इति बीजम् । तद् बीजं तस्याः श्रियः श्रीमिति बीजं तस्या एवाभिधायकमिति पृथक्सम्बन्धः । लज्जाबीजे ध्यानविशेषमाह - **पाशेति** ।। 54 - 59 ।।

**(लक्ष्म्या अपरं बीजमन्त्रद्वयम्)**

**अमध्ययुग्मस्वरगं तेनैवाङ्गमुदाहृतम् ।**
**सत्ताबीजं च दुर्बीजं तद्वदेव प्रकीर्तितम् ।। 60 ।।**
**वर्णः श्यामो विशेषोऽत्र ताम्बूलं नीलमुत्पलम् ।**
**चक्रशङ्खौ तर्जनं च शूलमित्यपरत्र च ।। 61 ।।**

**(पञ्चाक्षरः भूमन्त्रः, षडक्षरः दुर्गामन्त्रः, वेदोक्तदुर्गामन्त्रश्च)**

**नमोऽन्तः स्वेन सहितस्तदेवान्यो मनुः स्मृतः ।**
**दुर्गा त्रिष्टुप् कश्यपोक्ता तत्र वर्णोऽग्निवत् स्मृतः।।62।।**
**त्रिनेत्रत्वं च दुर्गायाः प्रायः सर्वत्र कथ्यते ।**
**पादैः समस्तेन तथा षड्वर्णेनाङ्गमुच्यते ।। 63 ।।**
**रमाया एव रूपाणि त्वेतानि हि विदो विदुः ।**
**मुख्यतो जामदग्न्यस्तु देवताऽस्य मनोः स्मृतः ।।64।।**

अमध्येति । मध्यमश्चासौ युग्मस्वरश्च मध्यमयुक्तस्वरः । तदन्ये

अमध्यमयुग्मस्वराः । तेषु तिष्ठति इति अमध्ययुग्मस्वरगम् । अमध्ययुग्मस्वरगं च तद् बीजं च अमध्ययुग्मस्वरगवत् । तेनेत्यर्थः । अयं भावः । अष्टौ दीर्घस्वराः तन्मध्यगौ ॠ ॡ इत्येतौ स्वरौ विनाऽवशिष्टेषु। आ ई ऊ ऐ औ अः इत्येतेषु स्वरेषु सम्बन्धेन लज्जाबीजेन ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः इति प्रकारेण अङ्गन्यासमन्त्रा इति । तद्वाचकबीजान्तरम् आह - **सत्ताबीजम् इति** । सत्तार्थकं भूमिति बीजम् । दुर्बीजं दुं इत्येतत्। तद्वदेव तस्याभिधायकत्वेनैव प्रकीर्तितम् इत्यर्थः । बीजद्वये ध्येयवर्णविशेषमाह - **वर्णेति** । अत्र बीजद्वये आद्यबीजे अपरं विशेषमाह - **अत्र ताम्बूलम् इति** । अत्र आद्ये बीजे । द्वितीय्ये बीजेऽप्याह - **चक्रेति** । अपरौ मन्त्रावाह - **नमोन्त इति** । तत् भूं दुं इत्येतद् बीजद्वयमेव नमः शब्दान्तःस्वेन स्ववाचकेन सोद्देशेन सतोऽन्यो मनुरित्यर्थः । विधेयलिङ्गानुसारेण नमोन्त इत्यादौ पुंल्लिङ्गप्रयोगः तथा चैवं मन्त्रः - भूं भुवे नमः दुं दुर्गायै नमः इति । मन्त्रान्तरमाह - **दुर्गेति** । दुर्गाप्रतिपादकः त्रिष्टुप् छन्दोबद्धो जातवेदसे इति मन्त्रः । कश्यप प्रोक्ता काश्यपदृष्टा । सर्वदुर्गामन्त्रेषु विद्यापेक्षया जपादिसमये अतिकोपाभिव्यञ्जकत्रिनेत्रत्वध्यानस्याकर्तव्यत्वात् प्राय इत्युक्तम् । न्यासमन्त्रमाह - **पादैरिति** । व्यस्तैरिति शेषः । समस्तविशिष्टमन्त्रेण । पूर्वोक्ते ह्रां ह्रीम् इत्यादिभिः षड्भिर्वर्णैः न्यासः कार्यः इत्याह - **षडर्णेनेति** ।। 60 - 64 ।।

(वेदोक्तः चतुर्मुखमन्त्रः)

**हिरण्यगर्भसूक्तं च भृगुदृष्टं प्रकीर्तितम् ।**
**ब्रह्मधातृविरिञ्चाजपाद्यैरङ्गमुदाहृतम् ।। 65 ।।**
**ध्यायेन्निषण्णमजमच्युतनाभिपद्मे**
**प्रोद्यद्दिवाकरसमूहनिकाशमग्र्यम् ।**
**मातृप्रकारकरमुत्तमकान्तिमद्भि-**
**र्वक्त्रैः सृजन्तमखिलैः परमार्थविद्याः ।। 66 ।।**

(चतुर्मुखस्य पञ्चाक्षराष्टाक्षरमन्त्रौ)

**स्वयमुद्देशनतिमांस्तस्य पञ्चाक्षरो मनुः ।**
**स्वयमेवापरोऽष्टार्णस्तादृशः सम्प्रकीर्तितः ।। 67 ।।**

(वेदोक्तमुख्यप्राणमन्त्रः)

**बळाद्यं भृगुणा दृष्टं प्राणाग्नेः सूक्तमुच्यते ।**
**प्राणाद्यैः पञ्चभिस्तस्याप्यङ्गान्युक्तानि सूरिभिः ।। 68।।**

**उद्यद्रविप्रकरसन्निभमच्युताङ्के**
**स्वासीनमस्य नुतिनित्यवचःप्रवृत्तिम् ।**
**ध्यायेद्गदाभयकरं सुकृताञ्जलिं तं**
**प्राणं यथेष्टतनुमुन्नतकर्मशक्तिम् ।। 69 ।।**

हिरण्यगर्भः समवर्तताग्रे इति वर्गद्वयात्मकं सूक्तं हिरण्यगर्भस्य मन्त्ररूपमित्यर्थः । **ब्रह्मेति** । ब्रह्मादिशब्दैः सोद्देशैरित्यर्थः । **मातृ प्रकारमिति** । पद्मद्वयाभयवरोद्यतकरम् इत्यर्थः । तस्यानन्तरं मन्त्रम् आह - **स्वयम् इति** । उद्देशनमः शब्दवान् । स्वयं स्ववाचकब्रह्मशब्द पञ्चाक्षरो मनुरित्यर्थः । 'ब्रह्मणे नम' इति मन्त्रनिष्पत्तिः । मन्त्रान्तरमाह - **स्वयम् इति** । स्ववाचकोऽपरो हिरण्यगर्भशब्दः तादृशः उद्देशनमःशब्दाभ्यां युक्तः । अष्टाक्षरो मनुरित्यर्थः । तथा च 'हिरण्यगर्भाय नमः' इति मन्त्रः ।

वायुमन्त्रमाह - **बळाद्यमिति** । 'बळित्था तद्वपुषेऽधायि' इत्याद्येकवर्गरूपं सूक्तम् । प्राणाग्नेः सर्वजीवनहेतोः स्वतो गमनाद्यसमर्थत्वात् अगशब्दवाच्यं नेतुः मुख्यप्राणस्य मन्त्ररूपमित्यर्थः । **प्राणाद्यैरिति** । प्राणापानव्यानोदानसमानैः इत्यर्थः । **नुतिनित्य इति**। नित्यं नुतिरूपा वचःप्रवृत्तिर्यस्य तम् । यद्वा स्तुतिरूपं यन्नित्यवचः वेदवाक्यं तत्प्रवृत्तिर्यस्य तमित्यर्थः । यथेष्टतनुं अनेकरूपं, अति बृहत् तनुं वा ।। 65 - 69 ।।

(पञ्च मुख्यप्राणमन्त्राः)

प्राणाद्याः पञ्चमन्त्राश्च तस्य देवस्य वाचकाः ।
उच्यते हरिरप्येतैः साक्षान्नारायणादिकः ।। 70 ।।

(ब्रह्माणी - भारतीमन्त्रौ)

ब्रह्माण्या अपि भारत्या गौरीर्यस्त इति श्रुतौ ।
मन्त्रौ दीर्घतमोदृष्टौ सर्वाभीष्टप्रदायकौ ।। 71 ।।
उद्यद्दिवाकरसमूहनिभां स्वभर्तु -
रङ्के स्थितामभयसद्वरबाहुयुग्माम् ।
मुद्रां च तत्त्वदृशये वरपुस्तकं च
दोर्युग्मकेन दधतीं स्मरताऽत्मविद्याम् ।। 72 ।।

(ब्रह्माणीभारत्योर्मन्त्रान्तरम्)

पादैर्व्यस्तैः समस्तैश्च तदङ्गानि विदो विदुः ।
स्वयमुद्देशनत्यन्तौ मन्त्रौ द्वावपरौ तयोः ।। 73 ।।
मन्त्रा एते हरेः प्रीतिदायकाः सर्वकामदाः ।
इष्टं दैवं हरिः साक्षाल्लक्ष्मीर्भाग्यस्य देवता ।
गुरुर्ब्रह्माऽथ वायुर्वा विद्यादेव्यौ प्रकीर्तिते ।। 74 ।।
तस्मादेते प्रिया विष्णोरन्तरङ्गतया सदा ।
ज्ञेयाश्चैव प्रपूज्याश्च विष्णोः प्रीतिमभीप्सता ।। 75।।

अपरानपि मन्त्रानाह - प्राणाद्या इति । उद्देशनमःशब्दयुक्ता इत्यर्थः । प्राणाय नमः इत्यादि मन्त्रप्रकारो द्रष्टव्यः । सरस्वती भारती मन्त्रौ युगपदाह - गौरीर्यस्त इति । 'गौरीर्मिमाय सलिलानि तक्षति' । 'यस्ते स्तनः शशयो यो मयोभूर्येन' इति प्रसिद्धौ इत्यर्थः। तत्वदृशये मुद्रां ज्ञानमुद्राम् आत्मविद्यां परमात्मप्रतिपादकविद्या-

भिमानिनीम् इति । अभिमान्यभिमानयोरैक्योक्तिर्महतश्चतुर्मुखादिति यथा । अपरौ मन्त्रौ तयोराह - **स्वयमिति** । स्ववाचकौ ब्रह्माणी-भारतीशब्दावित्यर्थः। एवं च 'ब्रह्माण्यै नमः' 'भारत्यै नमः' इति मन्त्रौ लब्धौ । शिवादिमन्त्रान् वक्तुं तेषामुक्तमन्त्रसाम्यप्रतीतिं वारयितुमाह - **मन्त्रा इति** । प्रीतिदायका इत्यत्र विशेषेणेति शेषः । प्रीतिदायकत्वं विवृणोति - **इष्टमिति** । विद्यादेव्यौ विद्याभिमानि-देवते ।। 70 - 75 ।।

(शिवपञ्चाक्षरमन्त्रः)

**उद्देशनतियुङ्मन्त्रः स्वयमेव शिवस्य तु ।**
**वर्णैरेतैस्तदङ्गानि वामदेवो मुनिः स्मृतः ।। 76 ।।**
**पङ्क्तिः शब्दार्थविज्ञाने न हि छन्दसि संशयः ।**
**ध्येयः पञ्चमुखो रुद्रः स्फटिकामलकान्तिमान् ।**
**विद्युच्छुभ्रासितरजःश्यामान्यस्य मुखानि तु ।**
**जटावबद्धेन्दुकलः प्रियायुङ् नागभूषणः ।। 77 ।।**

शिवमन्त्रमाह - **उद्देश इति** । स्वयंवाचकशिवशब्द एव शिवस्य मन्त्र इति शेषः। 'शिवाय नमः' इति मन्त्रः ।

अस्य मन्त्रस्य छन्द आह - **पङ्क्तिरिति** । च्छन्द इति शेषः । पङ्क्तिच्छन्द इति सुज्ञानयोक्तम् । वस्तुतस्त्वक्षरगणनया च्छन्दोज्ञानं सुकरमित्याह **शब्दार्थविज्ञान** इति । पञ्चाक्षरोऽयं शब्दः, षडक्षरोऽयं शब्द इत्यादि प्रकारेणाक्षरसङ्ख्यापूर्वकं शब्दस्वरूपज्ञाने सति छन्दसि संशयो नास्ति (इति) भावः । यथा चैत्तथोक्तं पुरस्तात् । यदत्र वक्तव्यं तदनुपदमेव दर्शयिष्यते । यद्वा तैत्तिरीयशाखागत पञ्चाक्षरपङ्क्तिरिति वाक्यार्थविज्ञाने सति इत्यर्थः। पङ्क्तिशब्दार्थ इति पाठे तु शिवपञ्चाक्षरे छन्दसि संशयो नास्ति कुत इत्यत उक्तम्

- पङ्क्तिरिति । पङ्क्तिशब्दार्थयोः चत्वारिंशाक्षरत्वम् । तस्य विज्ञाने सति इत्यर्थः । चत्वारिंशदक्षररूपपङ्क्तिछन्दसोऽष्टमभागस्यापि पङ्क्तिछन्दस्त्वात् शिवपञ्चाक्षरमन्त्रस्यापि तदष्टमभागत्वेन न छन्दोविषये संशय इति भावः । यद्वा पञ्चाक्षरापङ्क्तिरिति श्रुत्युक्तपङ्क्तिशब्दार्थज्ञाने सति इत्यर्थः ।। 76 - 77 ।।

'परिवारतया ग्राह्या अपि हेयाः प्रधानतः' इत्यादौ प्राधान्येनेतरदेवताध्यानादेर्निषिद्धत्वात् कथं रमाब्रह्मशिवादीनां प्राधान्येन ध्येयत्वमित्यतो न प्राधान्येन ध्येयत्वं तेषां किन्तु भगवत् प्रतिमात्वेनैव इत्याशयेन आह - मन्त्रेष्विति ।

**मन्त्रेष्वेतेषु सर्वेषु वाच्यस्तारेण केशवः ।**
**अन्तर्यामितया ध्येयः सर्वदेवेषु सर्वदा ।। 78 ।।**

**(पञ्चाक्षरः पार्वतीमन्त्रः)**

**स एव वनितालिङ्गः पार्वत्या मनुरुच्यते ।**
**गौरी वराभयकरा ध्येया पीताम्बरा च सा ।। 79 ।।**

सर्वदा तत्तन्मन्त्रप्रतिपाद्यसर्वदेवेषु केशवोऽन्तर्यामितया ध्येयः। ननु तत्तन्मन्त्राणां तत्तद्देवताप्रतिपादकत्वेन केशवप्रतिपादकत्वाभावात् कथं तत्तज्जपाङ्गध्यानकालेऽन्तर्यामित्वेन भगवद्ध्यानमित्याशङ्कामपनुदन् केशवं विशिनष्टि - मन्त्रेषु इति । सर्वेपूक्तवक्ष्यमाणतत्तद्देवानां मन्त्रेषु 'अनोङ्कृतमासुरं भवति' 'स्रवत्यनोङ्कृतं ब्रह्मे'त्याद्युक्तेः आद्यन्तयोस्ताराध्याहारस्यावश्यकत्वात् । अध्याहृतस्य मन्त्रावयवत्वात् । तत्तद्वाच्यस्य भगवतो मन्त्रप्रतिपाद्यत्वं लब्धमेवेति भावः । तदुक्तं न्यायसुधायां - 'न चोह्यमानं वाक्यात् पृथुगिति शक्यते वक्तुम्' इति । तारवाच्यत्वेनैव भगवतो मन्त्रप्रतिपाद्यत्वमित्येतदुपलक्षणम् । परममुख्यवृत्त्या सर्वमन्त्रप्रतिपाद्यो हरिरेव । तदुक्तमनुव्याख्याने -

'देवतान्तरगाः सर्वे शब्दाः वृत्तिनिमित्ततः । विष्णुमेव वदन्त्यद्धा तत्सङ्गादुपचारतः । अन्यदेवान् वदन्ति' इत्यादिना । पार्वतीमन्त्रमाह - स एव इति । पूर्वमन्त्रगतशिवशब्द एव वनितालिङ्गश्चेदित्यर्थः । 'शिवायै नमः' इति मन्त्रः ।। 78 - 79 ।।

(शेषमन्त्रः)

स्वयमुद्देशनत्यन्तः पूर्वपूर्वः षडक्षरः ।
सनत्कुमारदृष्टोऽयं मन्त्रः शेषस्य कामदः ।। 80 ।।
दधानो हलसौनन्दौ श्वेतवर्णः कृताञ्जलिः ।
सहस्रमूर्धाऽद्वितीयकर्णभूषः प्रियायुतः ।
वनमाली नीलवासा ध्येयो विष्णोस्तु पृष्ठतः ।। 81 ।।

(गरुडमन्त्रः)

व्यत्यस्तपक्षितारौ च स्वाहान्तो गारुडो मनुः ।
काश्यपोऽस्य मुनिर्ध्येयः सुधापूर्णं हिरण्मयम् ।। 82 ।।
दधानः कुम्भमभयं पीतः शुक्लोऽरुणो हरिः ।
कृष्णश्चाऽजानुतो नाभेः कण्ठात् कादन्त एव च ।।83
प्रियायुक् पुरतो विष्णोः पक्षतुण्डसमन्वितः ।
जङ्गमस्थावरविषहृदयं सर्वकामदः ।। 84 ।।

(लोकपालमन्त्राः)

मन्त्राश्च लोकपालानां नमोऽन्ताः सर्वकामदाः ।
पीतरक्तासितश्वेतशुक्लरक्ताश्च वर्णतः ।। 85 ।।
सप्रियाः साभया वज्रशक्तिदण्डासिपाशिनः ।
गदाकुमुदशूलर्ष्टि खड्गिनो भूषणोज्ज्वलाः ।। 86 ।।

शेषमन्त्रमाह - **स्वयम् इति** । स्ववाचकशेषशब्दपूर्वः पूर्वाक्षरभूतशेकार पूर्वः । 'शें शेषाय नमः' इति मन्त्रस्थितिः । सौनन्दशब्देन मुसलमुच्यते । अद्वितीया कर्णभूषा यस्य स तथोक्तः । एककर्णाभरण इत्यर्थः । यथोक्तं पञ्चमस्कन्धे । 'नीलवासा एककुण्डल' इति ।

गरुडमनुमाह - **व्यत्यस्तेति** । पक्षिशब्दः क्षिप इति तारव्यत्यस्तपक्षितारौ ताभ्यामुपेत इति भावः । ॐ क्षिप स्वाहेति मन्त्रस्थितिः । कश्यप एव काश्यपः । **आजानुत इति** । जानुपर्यन्तं पीतः। आनाभेः शुक्लः । आकण्ठात् अरुणः । आकर्णाद् हरिद्वर्णः । अन्ते शिरसि कृष्ण इति भावः ।

लोकपालानां मन्त्रान् आह - **मन्त्रांश्चेति** । नमोन्ताः सोद्देशाः । तथा च 'इन्द्राय नम' इत्यादि द्रष्टव्यम् । तेषां ध्यानमाह - **नील इति** । इन्द्रः पीतः। अग्नी रक्तः। यमनिऋत्यसितौ । वरुणः श्वेतः। वायू रक्तः । कुबेरेशानौ शुक्लाविति विवेकः । वज्राद्यैरष्टभिरायुधैरुपेता इति ज्ञातव्यम् । एतेन अभयवज्राद्यष्टकं यष्टिखण्डोपेतैर्बाहुभिरुपेता इत्युक्तं भवति ।। 80 - 86 ।।

(स्कन्दमन्त्रः)

**अग्निश्च स्वयमुद्देशी सनमः स्कन्दवाचकः ।**
**कौशिकोऽस्य मुनिर्वह्निवर्णः षण्मुख उज्ज्वलः ।। 87।।**
**धनुःशक्तिधरो ध्येयः कामदो भयनाशनः ।**

(सूर्यमन्त्रः)

**ह्रस्वः कृपालुः सेतश्च स्वयमन्यः स्वयं तथा ।। 88 ।।**
**सतारोऽष्टाक्षरः सौरः क्रमव्युत्क्रमतः पदैः ।**
**अङ्गानि पद्मयुगलधरो ध्येयोऽरुणो रविः ।**
**सर्वव्याधिहरः श्रीदो वृष्टिदोऽयं मनुः स्मृतः ।। 89 ।।**

(विघ्नेश्वरमन्त्रः)

मोनयदासाप्रप्रक्षि व्यत्यस्तो विघ्नराण्मनुः ।
रक्ताम्वरो रक्ततनू रक्तमाल्यानुलेपनः ।। 90 ।।
महोदरो गजमुखः पाशदन्तांकुशाभये ।
बिभ्रद्ध्येयो विघ्नहरः कामदस्त्वरया ह्ययम् ।। 91 ।।
तत्र तत्र स्थितो विष्णुस्तत्तच्छक्तीः प्रबोधयन् ।
एक एव महाशक्तिः कुरुते सर्वमञ्जसा ।। 92 ।।

षण्मुखमन्त्रमाह - **अग्निरिति** । रमित्यग्निबीजम् । अग्निरित्यनेनोच्यते । स्वयं वाचकः स्कन्दशब्दः । 'रं स्कन्दाय नमः' इति मन्त्रः।

सूर्यमन्त्रमाह - **ह्रस्वः इति** । कृपालुः कृपालुवाचकः घृणि इति शब्दः । स च ह्रस्वः अदीर्घः । सेतश्च विसर्गयुक्तः । एवं च घृणिः इति भवति । स्वयं वाचकः सूर्यशब्दः । अन्यः स्वयंवाचको अन्य आदित्यशब्दः । उभयत्रापि सेत इत्यनुवर्तते । एवं च 'ॐ घृणिः सूर्य आदित्य' इति मन्त्र निष्पत्तिः । पदैरिति । तारातिरिक्तैरिति शेषः।

विघ्नेश्वरमन्त्रमाह - **मोनयदासा इति** । अयं वर्णसमुदायः व्यत्यस्तः सन् क्षिप्रप्रसादाय नम इति रूपेण मनुरित्यर्थः । पाशयुक्तो दन्तो यस्य स पाशदन्तः । पाशदन्तधरः इति यावत् । पाशदन्ताङ्कुशाभय इति पाठे तु पाशदन्ताभ्यां युक्ते अङ्कुशाभय इति मध्यमपदलोपसमासः । ननूक्तमन्त्रप्रतिपाद्यदेवानाम् अस्वतन्त्रत्वेन स्वातन्त्र्येण फलदानासंभवात् कथमन्यदेवमन्त्राणां नानाविधफलसाधकत्वम् अभिहितम् इत्यत आह - **तत्र तत्र इति** ।। 88 - 92 ।।

अन्यदेवतामन्त्रेण मन्त्रसमाप्तिमरोचयमानो अत्युत्तमधान्वन्तरमष्टाक्षरमाह - **स्वयम् इति** ।

(धन्वन्तरिमन्त्रः)

स्वयमुद्देशवान् पूर्वपूर्वो हृदयसंयुतः ।
धान्वन्तरो महामन्त्रः संसृतिव्याधिनाशनः ।
अत्रोक्तसर्वमन्त्राणां नायकोपलसन्निभः ।। 93 ।।

चन्द्रौघकान्तिममृतोरुकरै र्जगन्ति
सञ्जीवयन्तममितात्मसुखं परेशम् ।
ज्ञानं सुधाकलशमेव च सन्दधानं
शीतांशुमण्डलगतं स्मरताऽत्मसंस्थम् ।। 94 ।।

मूर्ध्नि स्थितादमुत एव सुधां स्रवन्तीं
भ्रूमध्यगाच्च तत एव च तालुसंस्थात् ।
हार्दाच्च नाभिसदनादधरस्थिताच्च
ध्यात्वाभिपूरिततनुर्दुरितानि हन्यात् ।। 95 ।।

अज्ञानदुःखभयरोगमहाविषाणि
योगोऽयमाशु विनिहन्ति सुखं च दद्यात् ।
उन्मादविभ्रमहरः परतश्च सान्द्र -
मानन्दमेव पदमापयति स्म नित्यम् ।। 96 ।।

ध्यात्वैव हस्ततलगं स्वमृतं स्रवन्तं
देवं स यस्य शिरसि स्वकरं निधाय ।
आवर्तयेन्मनुमिमं स च वीतरोगः
पापादपैति मनसा यदि भक्तिनम्रः ।। 97 ।।

शतं सहस्रमयुतं लक्षं वाऽऽरोगसंक्षयात् ।
इममेव जपेन्मन्त्रं साधूनां दुःखशान्तये ।। 98 ।।
ज्वरदाहादिशान्त्यर्थं तर्पयेन्मनुनाऽमुना ।
ध्यात्वा हरिं जले सप्तरात्राज्ज्वुतिर्विनश्यति ।। 99 ।।

अयुतामृतसमिद्धोमगोघृतक्षीरसंयुतात् ।
सर्वे रोगा विनश्यन्ति विमुखो न हरेर्यदि ।। 100 ।।
भूताभिचारशान्त्यर्थमपामार्गाहुतिक्रिया ।
द्विगुणाऽमृतया पश्चात् केवलेन घृतेन वा ।। 101 ।।

स्ववाचकः धन्वन्तरिशब्दः पूर्ववर्णपूर्वः । स च वीजत्वेन विन्दु-सहित इति द्रष्टव्यम् । तथा चैवं मन्त्रनिष्पत्तिः 'ॐ धं धन्वन्तरये नमः' इति । अमृतोरुकरैः नाशरहितामृतस्राविभिः किरणैरित्यर्थः । अमृतपदस्यामृतत्वस्य मुक्तत्वस्य दातृत्वं चार्थः । अमुतः चन्द्रमण्डलात् तालुसंस्थादित्यादावपि तत एवेति सम्बध्यते । सुधां स्रवन्तस्यस्येति सः । ध्यातेत्यर्थः । तर्पयेत् । तर्पणं कुर्यात् । सप्तरात्रात् । सप्तरात्र पर्यन्तम् । जूतिः रोगः । हरेर्यदि पराङ्मुखो न तदा सर्वेरोगा नश्यन्ति इति सम्बन्धः । यदि विमुखः तर्हि न नश्यन्ति । अपामार्गाहुतिक्रिया। अपामार्गाख्यसमिधा द्विगुणया अमृतसमिधेत्यर्थः । घृतेन वा इति । द्विगुणेनेति लभ्यते ।। 93 - 101 ।।

पश्चादात्मसंरक्षणार्थं कर्तव्यमाह - द्विगुणेति ।

अयुर्विवृद्धये नित्यं जन्मनक्षत्र एव वा ।
चतुश्चतुर्भिर्दूर्वाभिः क्षीराज्याक्ताभिरिष्यते ।। 102 ।।
सर्वाः क्रिया हरौ भक्ते हरिभक्तैः स्वनुष्ठिताः ।
गुरुभक्तैः सदाचारैः फलन्त्यद्धा न चान्यथा ।। 103 ।।
ब्रह्मान्ता गुरवश्चैव सम्प्रदायप्रवर्तकाः ।
तत्तद्गुणानुसारेण पूज्या मान्याश्च कृत्स्नशः ।। 104।।

नित्यं प्रतिदिनं क्षीरज्याक्ताभिः गोदुग्धघृतमिश्राभिः । साङ्गादेव फलावश्यंभावात् जपादिसर्वक्रियाणां प्रधानाङ्गमाह - सर्वाः क्रियेत्या-दिना । भक्त इति विषयसप्तमी । गुरुं प्रदर्शयन्नेव तत्पूजादि-

कर्तव्यमित्याह - ब्रह्मान्ता इति । स्वोत्तममारभ्येति शेषः । उक्तं च 'स्वात्मनो मुख्याः क्रमाद् गुरव' इति । विदुषोपकारसद्भावात् व्याख्यान-परम्पराप्रवर्तकाः गुरवो विशेषेण नम्या इत्याशयेन ब्रह्मान्तपदेन गृहीतानामपि सम्प्रदायप्रवर्तका इति पुनर्ग्रहणम् ।। 102-104 ।।

**सर्वेभ्योऽभ्यधिका भक्तिर्विष्णौ स्यादतिनिश्चला ।**
**लक्ष्मीब्रह्मादिषु ततः क्रमेण स्यात्सुभाविता ।**
**एवं विद्याः फलिष्यन्ति नान्यथा तु कथञ्चन ।। 105।।**
**शुभान् ध्यायन्ति ये कामान् गुरुदेवप्रसादजान् ।**
**इतरानात्मपापोत्थांस्तेषां विद्या फलिष्यति ।। 106 ।।**
**मुक्तावपि च संसारे नाऽत्मनो विष्णुतां क्वचित् ।**
**ब्रह्मरुद्रादिभावं वा साम्यं वाऽऽधिक्यमेव वा ।। 107।।**
**अतद्वशत्वमथवा यः स्मरेत् स तु सिद्धिभाक् ।**
**नान्यथा सिद्धिमाप्नोति कल्पकोटिशतैरपि ।। 108 ।।**

स्वावराणामपि क्वचित् सम्प्रदायप्रवर्तकत्वे तेषामपि पूज्यत्व ज्ञापनार्थमेतत् पदेन तदुक्तिरिति । तदुक्तम् अन्यत्र - 'मर्यादार्थं तेऽपि पूज्या' इति । हरिभक्त्यै गुरुभक्त्या इत्युक्ते हरौ गुरुषु च समानभक्तेः कर्तव्यत्वप्रतीति वारयति - सर्वेभ्य इति । ततः हर्यनन्तरं क्रमेण रमादिस्वरूपतारतम्यक्रमेण । सुभाषिता सम्यक् संपादिता-विमुक्तावपि इति । अत्र स्मरेत् इत्यन्वयः ।। 105-108 ।।

**स्मृत्वा गुरुं पूर्वगुरुमादिमूलगुरूंस्तथा ।**
**देवतां वासुदेवं च विद्याभ्यासी तु सिद्धिभाक् ।। 109।।**
**अवज्ञाता गुरूणां च देवतानां न सिद्ध्यति ।**
**प्रयाति च तमो घोरं मन्त्रावज्ञाकृदेव च ।। 110 ।।**

यस्तारतम्यवेत्ता स्याद्गुरूणां देवतास्वपि ।
भक्तिमान् गुरुदेवेषु वासुदेवे च सिद्ध्यति ।। 111 ।।
गुरुदेवप्रतीपानां विमुखस्तत्प्रिये रतः ।
अकामक्रोधलोभश्च न चिरात् सिद्धिमाप्नुयात् ।। 112।।
सकामेभ्योऽमितगुणा ह्यकामैस्तु कृताः क्रियाः ।
तस्मादकाम एवालं भजेद्विष्णुं सनातनम् ।। 113 ।।

**स्मृत्वेति** । **आदिमूलगुरून्** इति । आदिगुरुः मध्वाचार्यः । मूलगुरुः वेदव्यासः । देवतां वासुदेवं चेति समानाधिकरणदेवताशब्दस्य नियतस्त्रीलिङ्गत्वात् न विरोधः । 'देवतां रमामित्यादिना हरिगुरुभक्तेश्चावश्यकत्वम् उक्तम् । प्रसङ्गात्तदवज्ञाकर्तुरनर्थमाह - **अवज्ञाता इति** । मन्त्रावज्ञाकृच्च तमः प्रयातीति च । गुरुदेवतातारतम्यज्ञानं चाङ्गमित्याह - **य इति** । देवतास्विति सप्तमी षष्ठ्यर्थे । गुरुदेवताभक्तेरावश्यकत्वज्ञापनार्थं पुनर्भक्तिमान् गुरुदेवेष्वित्युक्तिः । अत्र गुरुशब्देन उत्तमा एवोच्यन्ते । न स्वोत्तममात्राः । तद्भक्तेष्विति तेषां पृथग्ग्रहणात् । तत्प्रिये गुरुदेवप्रिये ।। 109 - 113 ।।

एवं प्रासङ्गिकमुक्त्वेदानीं अवश्यं वक्तव्यमत्र मन्त्रमाह - **अयं मे इति** ।

(वेदोक्तधान्वन्तरमन्त्रः)

अयं मे हस्त इति च मन्त्रः पूर्वोक्तवत् स्मृतः ।
अत्रोक्तास्तु क्रियाः सर्वमन्त्रेष्वत्युपलक्षणम् ।। 114।।
विजयस्तम्भनादीनि नारसिंहैर्विशेषतः ।
जामदग्न्यैश्च कार्याणि राघवैर्यादवैरपि ।
वाराहैः स्तम्भनं क्षिप्रं श्रीकराः कथिताः पुरा ।। 115

'अयं मे हस्तो भगवानिति' मन्त्रश्च पूर्वोक्तधान्वन्तरमन्त्रवत् धन्वन्तरिप्रतिपादकः । उक्ताशेषफलकश्चेत्यर्थः । धान्वन्तरमन्त्रोक्त जपहोमादि क्रिया सर्वमन्त्रेष्वतिदिशति - **अत्र इति** । प्रसङ्गात् नृसिंहादि मन्त्रेष्वनुक्तं फलमाह - **विजयेत्यादिना** । विशेषत इति जपादिकं सर्वमन्त्रैरपि भवति । नारसिंहैस्तु विशिष्येति भावः ।

**जामदग्न्यैरिति** । विशेषत इत्यनुवर्तते । स्तम्भनम् अग्न्यादि स्तम्भनम् । **श्रीकरा इति** । पुरा कथिताः सर्वेऽपि मन्त्राः श्रीकराः सम्पत्कराः इत्यर्थः । यद्वा श्रीकरा इति बहुवचनमाद्यर्थे । श्रीकर शब्दस्यावृत्तिः इति शब्दो अध्यहार्यः । तथा च श्रीकरादयो मन्त्राः श्रीकरा इति पुरा कथिता इत्यर्थः । नृसिंहाद्यैः मन्त्रैः विजयादीनि भवन्तीत्युक्तम् ।। 114 - 115 ।।

**बहुबाहुं महाकायमुद्युक्तं चोद्यतायुधम् ।**
**स्मरन् विजयमाप्नोति स्तम्भनादींश्च कारयेत् ।।116।।**
**वसुपूर्णकरं रत्नपर्वतस्थं विभावयन् ।**
**वसुसिद्धिमवाप्नोति सेव्यमानमजादिभिः ।**
**श्रिया विभूतिभिर्युक्तं भावयन् भूतिमाप्नुयात् ।। 117।।**
**यद्यन्मनोगतं तस्य तत्तदाप्नोत्यसंशयम् ।**
**तथा तथा हरिं ध्यायन् क्रियास्तास्ताश्च साधयन् ।। 118।।**
**श्रिये पद्मानि जुहुयात् सम्प्रीत्या उत्पलानि च ।**
**शरान् जयाय जुहुयादभिमन्त्र्य प्रयोजयेत् ।। 119 ।।**
**विद्यायै मन्त्रितं वारि वचां वा तुलसीमपि ।**
**ब्राह्मीं घृष्टं सुवर्णं वा शतावृत्त्या तु नित्यशः ।। 120।।**
**अकुर्वंश्च क्रिया भक्त्या निरपेक्षो भजन् हरिम् ।**
**सर्वमेतदवाप्नोति विशेषेण न संशयः ।। 121 ।।**

अत्र विजयादिप्राप्त्यर्थं तत्तदुपयुक्तध्यानविशेषः कार्य इत्याह - **बहुवाहुमित्यादिना** । विभायन् ध्यायन् । श्रिया रमया । विभूतिभिः सम्पद्भिः । तथा तथेति । स्वमनोगतं यथा विद्यादिकं तत्तद्दिष्टत्वेन इत्यर्थः । ताः ताः स्वस्वमनोनुगततत्तत्प्रयोजनानुकूलाः क्रियाः साधयन् । ता एव क्रिया लेशतो दर्शयति **श्रिया इत्यादिना** । **विद्यायै मन्त्रितम् इति** । नित्यशः शतावृत्या मन्त्रितं वारि पिवेदिति सम्बन्धः। वचामित्यादौ मन्त्रितमिति पदं लिङ्गव्यत्ययेनानुवर्तते । भक्षयेदिति शेषः । श्रिय इत्यादिनोक्तक्रियाकरणं सकामस्यैव अकामस्य न तन्नियम इत्याशयेनाऽऽह - **अकुर्वन्निति** । केवलैश्वर्यादिविषयककामनारहित इत्यर्थः । भगवदुपास्त्यङ्गभूतैश्वर्यादिकामनाया अनिषिद्धत्वस्य 'आवहन्ती वितन्वाना' इत्यादौ दृष्टत्वात् ।। 116-121 ।।

इदानीमितिकर्तव्यतारूपसर्वमन्त्रगतवर्णैः कर्तव्यं न्यासमाह - **सृष्टिस्थितीति** ।

**सृष्टिस्थितिलयन्यासाः प्रातिलोम्यानुलोमतः ।**
**स्थित्यन्ता एव वर्णानां श्रेष्ठा एवं चतुर्दश ।**
**संहृत्यन्ता मोक्षिणां च एकविंशतिरेव वा ।। 122 ।।**
**पादहृत्केषु नाभ्यास्ययुक्तं च सललाटकम् ।**
**सनासिकादृग्जान्वोश्च सकोष्ठं सोरुकं तथा ।। 123 ।।**
**सोरस्कं च सकण्ठं च सभुजद्वयमेव च ।**
**सगण्डयुग्मं सालीकं सतुन्दक्रोडकं तथा ।। 124 ।।**
**समूलं च सगुह्यं च सपार्श्वद्वयमेव च ।**
**सदोर्द्वयं व्यापकं च गलपार्श्वद्वयेन च ।। 125 ।।**
**ककुत्स्तनद्वयेनापि पृष्ठमूलेन सर्वशः ।**
**न्यासो यथाक्रमं प्रोक्तो मन्त्रेष्वेतेषु कृत्स्नशः ।**
**प्रतिमायामात्मनि च न्यासोऽथ सन्निधानकृत् ।। 126 ।।**

वर्णानां प्रातिलोम्यानुलोमतः सृष्टिस्थितिलयन्यासाः श्रेष्ठाः । अतः कार्या इति शेषः । अत्र प्रातिलोम्यानुलोमत इति अविवक्षित एव क्रमः किन्त्वनुलोमतः सृष्टि न्यासः । अर्धं प्रातिलोम्येन अर्धमानुलोम्येन लय इति ज्ञेयम् । अथवात्र पादहृत्केषु इत्यादिना संहृति क्रमानुसारिणैव न्यासस्थानानां वक्ष्यमाणत्वात् तदपेक्ष्ययैव प्रातिलोम्यानुलोमत इत्युक्तिः । एवं च अत्रोक्त प्रातिलोम्येन संहारक्रममपेक्ष्य व्युत्क्रमेण वस्तुतस्तु क्रमेण क्रियमाणो न्यासः सृष्टिन्यासः । अर्धं प्रातिलोम्येनार्धमनुलोमेनेत्येवं प्रातिलोम्यानुलोमतः क्रियमाणः स्थितिन्यासः । अनुलोमतो वक्ष्यमाण संहारक्रममेक्ष्य क्रमत एव वस्तु व्युत्क्रमत एव क्रियमाणो लयन्यासः इति विवेकः । न्यासोपसंहारमधिकारिविशेषनिष्ठत्वेन आह - **स्थिति इति** । स्थित्यन्ता एव न्यासा गृहाश्रमिणाम् इति शेषः । मोक्षिणां तुर्याश्रमिणां तु संहृत्यान्ता लयन्यासान्ता एव श्रेष्ठाः । कतिवारं कार्या इत्यत आह - **चतुर्दश इति** । चतुर्दशवारम् इत्यर्थः । पक्षान्तरमाह - **एकविंशतिरेव इति** । कुत्र न्यसनीय इत्यतो लयन्यासानुसारेण तत्स्थानान्याह - **पादहृत् इत्यादिना** इति सम्पुटसहितम् । क्रोडकं तु भुजयोर्मध्यम् । 'क्रोडकं तु भुजान्तरम्' इत्यमरः । व्यापकं समस्तदेहः । नन्वत्र त्रयस्त्रिंशत्स्थानान्युक्तानि । अत्रोक्तमन्त्रेषु वराहमन्त्र एक एव त्रयस्त्रिंशदक्षरः इतरे तु ततो न्यूनसङ्ख्याकवर्णोपेताः । तस्मात् एष न्यासो वराहमन्त्रमात्रे किमित्यत आह - **न्यास इति** । प्रोक्तोऽयं न्यासः । एतेष्वत्रोक्तेषु कृत्स्नशः मन्त्रेषु कर्तव्याः । नन्वेषां मन्त्राणां न्यूनवर्णत्वात् न्यासस्थानानामधिकत्वात् कथं न्यासकरणं इत्यत उक्तं - **यथाक्रममिति** । तत्तन्मन्त्रवर्णक्रममनतिक्रम्य वर्णसङ्ख्याक्रमानुसारेण इति यावत् । तथा च उक्तम् - 'मन्त्रेष्वेकाक्षरमन्त्रस्य व्यञ्जनस्वरबिन्दुभेदेन त्र्यक्षरत्वात् तदक्षरत्रयं पादहृत्केषु न्यासनीयम् । पञ्चाक्षरमन्त्रेषु नाभ्यास्ययुक्तं पूर्वोक्तं स्थानत्रयम् । षडक्षरमन्त्रेषु पूर्वोक्तस्थानपञ्चकमित्यादिक्रमेण आह ।

त्रयस्त्रिंशदक्षरवराहमन्त्रे तु मूलेन सहितेषु सर्वशः पूर्वेषु तत्त्वस्थानेषु न्यासः कार्य इति क्रमानुसारेण इति भावः । इतोप्यधिकाक्षरोपेतसूक्तेषु यथायोगभिमान्येवाङ्गानि वर्णन्यासस्थानमवगन्तव्यम् । सृष्ट्यादि न्यासस्य श्रेष्ठत्वमुपपादयति - **प्रतिमायाम् इति** । सन्निधानकृत् । हरेरिति शेषः ।। 122 - 126 ।।

**बीजान्तः साध्यमध्यं च विभक्तदलमन्त्रयुक् ।**
**वर्णानुप्रातिलोम्येन वृत्तं भूपुरसंयुतम् ।**
**बीजसन्दृब्धकोणं च यन्त्रं रक्षादिसाधकम् ।। 127 ।।**
**समं तत्सर्वमन्त्रेषु जप्तं धार्यं तु वा भुवि ।**
**विलिख्य मण्डले वा तत्पूजयेद्धरिमञ्जसा ।। 128 ।।**

'चक्राब्जादिकमण्डले' इत्यत्रादिशब्देन भद्रकयन्त्रमभिप्रेतम् । तत्र चक्राब्जभद्रकयोरुद्धारप्रकारः कथितः । इदानीं यन्त्रोद्धारप्रकारमाह - **बीजान्त इति** । बीजमन्तर्यस्य तद्बीजान्तः । तच्च तत् साध्यं च । तदेव मध्ये यस्य तत्तथोक्तम् । मध्ये बीजं विलिख्य तत्परितो दलापेक्षया मध्यभागेऽपेक्षितप्रयोजनवाचकं वाक्यं विलिखेदिति भावः । तत् परितो वर्णानामानुलोम्येन च विभक्तेषु दलेषु मन्त्रेणोक्तम् । तथा च यस्य मन्त्रस्य यः सिद्धिः यस्याऽस्ति तन्मन्त्रगतवर्णसमसङ्ख्याकानि दलानि कृत्वा तेषु तान् वर्णान् क्रमेण लिखेदिति भावः । अथवा विभक्त दलमन्त्रयुक् विविक्तदलेषु मन्त्रगतवर्णयुक्तम् इत्यर्थः । वर्णानुप्रातिलोम्येन वर्णानां पञ्चाशद्वर्णानां आनुलोम्येन युक्तम् इति शेषः। विभक्तदलेषु मन्त्रवर्णान् विलिख्य दलविवेकार्थं कृतेषु अवान्तरदलेषु देशेषु पञ्चाशद्वर्णान् क्रमेण पुनर्व्यु(त्क्र)मेण विलिखेदिति भावः । तद् बहिः वृत्तं वृत्तरेखोपेतं तद् बहिः भूपुरसंयुतं भूपुरशब्देन ग्रहाकार-रेखा उच्यन्ते । बीजसन्दृब्धकोणं बीजाक्षरेण पूरितकोणं यन्त्रस्य चतुरस्रतया वृत्ततया भूपुरादिविलेखने कोणचतुष्यमवशिष्टं भवति।

तत्र बीजाक्षरं विलेखेदिति भावः । यन्त्र लेखनमपि मन्त्रविशेष-निष्ठमित्याह - **सममिति** । यन्त्रलेखनानन्तरं किं कर्तव्यम् इत्यत आह - **जप्तम् इति** । स्पृष्ट्वेति शेषः । भुवि वा स्थापयेदिति शेषः । भुवि मण्डले तद्यन्त्रं विलिख्य तत्र हरिं पूजयेद् इत्यर्थः ।। 127-128 ।।

गुरुभक्त्येत्युक्तम् । के ते गुरव इत्यत आह - **प्रतिमा इति** ।

**प्रतिमोक्तलक्षणैर्यावद्युक्त आचार्य उत्तमः ।**
**सर्ववित्तपसा युक्त आज्ञाशक्तियुतो हरेः ।। 129 ।।**
**यावद्भक्तो यथालब्धैर्गुणैर्युक्तोऽथ वैष्णवः ।**
**गुरुः सत्सम्प्रदायज्ञस्तारतम्येन सिद्धिदः ।। 130 ।।**
**उत्तमादुत्तमा सिद्धिर्धर्ममोक्षादिषु स्फुटम् ।**
**तस्मादुत्तम आचार्ये लब्धे नातोऽवरं व्रजेत् ।। 131 ।।**

प्रतिमायामुक्तैर्यावल्लक्षणैरित्यर्थः । उपलक्षणमेतत् । द्वात्रिंश-ल्लक्षणैः चेति ज्ञेयम् । 'द्वात्रिंशल्लक्षणैर्युक्तो गुरुरुत्तम इष्यत' इति विष्णुतीर्थीये उक्तम् । 'द्वात्रिंशल्लक्षणैर्युत' इति चान्यत्र । **चाज्ञाशक्ति-युत इति** । आज्ञाशब्देन श्रुतिस्मृतीति उच्यते । 'श्रुतिस्मृती ममैवाज्ञे' इत्युक्तेः । एवं च स्वयमसंशयः यथा परसंशयच्छेदो भवति तथा व्याख्यानकरणे शक्तिमानित्यर्थः । यावद्भक्तः पूर्णभक्तः । 'यावत्तावत् असाकल्य' इत्यभिधानात् । अथ मुख्यो गुरुः न चेद्यावद्भक्त्या याव-द्योग्यता तावद्भक्तः । यथा स्वभक्तिलब्धैः स्वयोग्यतानुसारेण प्राप्तै-र्लक्षणैः सार्वज्ञादिव्याख्यातृत्वादिगुणैः युक्तो गुरुरित्यर्थः । इदमुक्तं भवति - मुख्यो गुरुः चतुर्मुखः । तस्यैवोक्तसम्पूर्णगुरुलक्षणपूरि-तत्त्वात् । तदुक्तम् - 'तस्माद् ब्रह्मा गुरुर्मुख्य' इति । तदन्ये तु स्वोत्तमान्ताः सर्वेऽपि क्रमात् अमुख्यगुरवः । क्रमादूनलक्षणत्वात् । उक्तं च अनुव्याख्याने - 'स्वोत्तमास्तु क्रमेणैव' 'क्रमादूनगुणास्त्वन्ये'

'ईरिताः गुरवः क्रमात्' इति च[1] । क्रमादमुख्याः । गुरवे युक्त्यन्तरमाह - **उत्तमादिति** । अगत्या गुर्वन्तरस्य प्राप्यत्वे कथम् इत्यत आह - **तारतम्येति** । तारतम्यसिद्धिरित्युक्तं विवृण्वन् सम्यक् ज्ञानादिसिद्धिमपेक्षतां अधिकगुरुप्रीतिरावश्यकीति वक्तुं पूर्वम् उत्तमगुरुं प्राप्तानां तत्समतदवरगुरुप्राप्तावनर्थमाह - **उत्तमादिति** ।। 129 - 131 ।।

अगत्या गुर्वन्तरस्य प्राप्यत्वे कथम् इत्यत आह - **एकस्येति** ।

**एकस्य शिष्यतां प्राप्य तदाज्ञां न विना समम् ।**
**अवरं वा व्रजेदुच्चगुणश्चेन्नैव दुष्यति ।। 132 ।।**
**विशेषतो गुणश्च स्याद्देवेष्वप्येवमेव हि ।**
**तस्मादुत्तममाचार्यं देवेशं चाऽश्रयेद्धरिम् ।। 133 ।।**
**अपरोक्षदृशेरेव यस्मान्मोक्षो न चान्यथा ।**
**अपरोक्षदृशिश्चैव श्रवणान्मननादनु ।। 134 ।।**
**सम्यङ्निश्चिततत्त्वस्य निदिध्यासनया भवेत् ।**
**द्विविधा सा च सम्प्रोक्ता विष्णुशास्त्रावमर्शनम् ।**
**एकं ध्यानं हरेरन्यच्चत्वार्यङ्गानि तस्य च ।। 135 ।।**

**उच्चगुणश्चेदिति** । पूर्वगुरुपरित्यागेन प्राप्यो गुरुरुच्चगुणश्चेत् पूर्वगुर्वाज्ञां विनाऽपि तत् प्राप्तिः न दुष्यति इत्यर्थः । न केवलं प्रत्यवायाभावः । अपि तु महाफलं च भवतीत्याह - **विशेषत इति** । **देवेष्विति** । उपास्यत्वेन देवताप्राप्तावपि अयमेव न्यायो द्रष्टव्य इति भावः । फलितमाह - **तस्मात् इति** । उत्तमगुरुदेवताप्राप्तेर्महाफलहेतुत्वादिति । ननु गुरुप्राप्तिरेव व्यर्था । स्वयं पुरुषार्थरूपत्वाभावात्। साधनत्वाभावाच्च । तथा च तद्विचार एवानुपपन्न इत्यत आह - **अपरोक्षदृशेरेव इति** । यस्माद्देवतापरोक्षदृशेरेव मोक्षो भवति । नान्यथा।

1. विष्णुतीर्थीये (1-253)

सा च गुरुभिः शास्त्रश्रवणात् अनु अनन्तरं तत्त्वनिश्चयवतो निदिध्यासनया भवेत् । तथा च श्रवणाद्यर्थमाचार्यमाश्रयेदिति भावः । गुरुप्राप्तेः साक्षात् पुरुषार्थ - तत्साधनान्यतरत्वाभावेऽपि महापुरुषार्थमोक्षसाधभूतश्रवणनिदिध्यासनादिकारणत्वेन परम्परया पुरुषार्थसाधनत्वात् न तत् प्राप्तिरनुपपन्ना इति भावः । प्रकृतनिदिध्यासनाया अवान्तरभेद कथनपूर्वकं तदङ्गानि तेषां प्रभेदांश्च प्रपञ्चेनाह - **द्विविधेत्यादिना** । तस्य ध्यानस्य च । **यमश्चेति** । अङ्गानि इति वर्तते ।।132-135।।

**यमश्च नियमश्चासा प्राणायाम इतीरितः ।**
**अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ ।। 136 ।।**
**यमाः शौचं तपस्तुष्टिः स्वाध्यायो हरिपूजनम् ।**
**नियमा वीरपद्मे च स्वस्तिकाद्यानि चाऽसनम् ।। 137।।**
**रेचकः पूरकश्चैव कुम्भकश्च त्रिधा स्मृतः ।**
**प्राणायामः स्मृतिं विष्णोर्विना नियम उच्यते ।। 138।।**
**अधीतिस्मृतियुक्तो हि निदिध्यासनमेव हि ।**
**प्राणायामे च विष्णोर्यत् स्मरणं ध्यानमेव तत् ।। 139।।**
**आसा शौचं प्राणयामो निष्परिग्रहपूर्वकाः ।**
**तप आद्याः क्रमात् सर्व उत्तरोत्तरतोऽधिकाः ।। 140।।**

**यमश्च इति** । अत्र अङ्गानि इत्युद्दिश्य यमश्च इत्यादि विधानात् पुल्लिङ्गोपपत्तिः । अहिंसादीनि यम इतीरिता इति द्रष्टव्यम् । तुष्टिरलं बुद्धिः । स्वाध्यायो वेदाध्ययनम् । स्वस्तिकादीत्यादिशब्देन गोमुखभद्रादीनां ग्रहणम् । **रेचक इति** । हरिस्मृति सहितरेचकादिरेव प्राणायाम इति द्रष्टव्यम् । **स्मृतिमिति** । हरिस्मृतिविहीनस्य रेचकादेः तथोक्तनियमान्तर्भावकथनात् । एवं नियमत्वेनोक्तस्वाध्यायस्यापि वाक्यार्थज्ञानपूर्वकं हरिस्मृतियुक्तत्वे शास्त्रावमर्शनरूपत्वेन निदिध्यासनान्तर्भाव एव इत्याह - **अधीतिरिति** । हरिस्मृतियुक्तरेच-

कादेः प्राणायामत्वमभिप्रेतम् । तत्र स्मृत्यंशस्य ध्यानान्तर्भाव इत्याह - **प्राणायामेऽपि इति** । विशिष्टस्य प्राणायामत्वं विशेषणमात्रांशस्य ध्यानत्वम् इति भावः । पृथगङ्गत्वेन उक्तासन प्राणायामाभ्यां सहितानां यमनियम प्रभेदानां धर्महेतुत्वं तरतमभावेन इत्यताह - **निष्परिग्रहपूर्वका इति** । अन्तिमापरिग्रहपूर्वका अहिंसा सत्यास्तेयब्रह्मचर्यरूपा यमप्रभेदाः, तपआद्याः तपस्तुष्टिस्वाध्याय हरिपूजनरूपा नियमप्रभेदाः। एते सर्वे उत्तरोत्तरोऽधिका इत्यर्थः । [1]तदुक्तं योगप्रदीपिकायाम् । 'आसा शौचं च धर्माङ्गि प्राणायामोऽपरिग्रहः । अहिंसासत्यमस्तेयं ब्रह्मचर्यं तपस्तथा । तुष्टिः यज्ञादयो धर्माः स्वाध्यायाभ्यर्चनं हरेः। उत्तरोत्तरमेतानि कर्तव्यानि विशेषतः' इति ।।136-140।।

एतत् सर्वापेक्षया श्रवणादयः श्रेष्ठा इत्याह - **सर्वस्माद् इति** ।

**सर्वस्मात् श्रवणाद्यास्तु मुख्या मुक्तिप्रसाधने ।**
**अज्ञस्य श्रवणं श्रेष्ठमयुक्तेर्मननं तथा ।। 141 ।।**
**ध्यानं निश्चिततत्त्वस्य तस्माच्छास्त्रावमर्शनम् ।**
**वरं दशगुणं तस्माद् व्याख्यैकस्य शतोत्तरा ।**
**अपरोक्षदृशाऽप्येषा कर्तव्या विष्णुतुष्टिदा ।। 142 ।।**
**य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।**
**भक्तिं मयि परां कृत्वा मामेवेष्यत्यसंशयः ।। 143 ।।**
**न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।**
**भविता न च मे तस्मादन्यः प्रियतरो भुवि ।। 144 ।।**

आदिपदेन 'श्रवणं च अथ मननं ध्यानमेव च' इत्यादिना योगदीपिकोक्तश्रवणमननध्यानशास्त्रावमर्शनानां ग्रहणम् । श्रवणादिष्ववान्तरं तारतम्यं सयुक्तिकमाह - **अज्ञस्य इति** । शास्त्रार्थज्ञानस्य

---

1. योगदीपिकायां इति स्याद्वा ।

श्रवणमेव श्रेष्ठं तस्य मननाद्यनधिकारित्वात् । अयुक्तेर्ज्ञातशास्त्रस्य तत्र युक्त्यनुसन्धानशून्यस्य मननं श्रवणापेक्षया वरम् । एतेन श्रवणापेक्षया मननस्योत्तमत्वे युक्तिः सूचिता भवति । एवम् उत्तरत्रापि द्रष्टव्यम् । निश्चिततत्त्वस्य श्रवणमननाभ्याम् इति शेषः । तस्मात् शास्त्रावमर्शनम् इति निश्चिततत्वस्य इत्यनुवर्तते । ततश्च श्रवणमननाभ्यां निश्चिततत्वस्य पुंसो ध्यानात् सच्छास्त्रावमर्शनमेव शतगुणोत्तमम् ।

(पाठप्रवचनस्य ध्यानादुत्तमत्वे युक्तिकथनम्)

ध्यानकाले बहुगुणानामप्रतिभासात् । शास्त्रावमर्शनेन तदुक्तानाम् अनेकेषां गुणानां प्रतिभासादिति भावः । शास्त्रालोडनरूपशास्त्रावमर्शनापेक्षया व्याख्यानतो विशेषगुणप्रतिपत्तेः तदेव वरमित्याह - **व्याख्येति** । एकस्य शिष्यत्वे सति इति शेषः । तस्योत्तमत्वमेव । हेतुसूचनेन विवृणोति - **अपरोक्षेति** । उक्तमर्थं गीतावाक्येन दृढयति - **यत इति** । अत्र कृष्णेन व्याख्यातुः स्वप्राप्तिरूपफलाभिधानात् स्वस्यातिप्रियकृत्वस्य प्रियत्वस्योक्तेश्च उक्तार्थोऽवसीयते[1] ।। 141 - 144 ।।

आसादौ च प्राणायाम इत्यत्रोत्तरत्राधिक्यकथनेन आसाशौचयोरपि प्राणायामादिवत् पृथग्धर्मकारणत्वप्रतीतिः स्यात् । ततस्तां निवारयति - **शौचेति** ।

**शौचासने त्वङ्गमात्रं न पृथग्धर्मकारणम् ।**
**प्राणायामादयस्तुष्टिपर्यन्ता द्विगुणाधिकाः ।। 145 ।।**
**स्वाध्यायोऽतः कोटिगुणस्ततोऽनन्तगुणा हरेः ।**
**पूजा तत्त्रिगुणं ध्यानमिति धर्मक्रमः स्मृतः ।। 146।।**

1. क्तेश्च ।

ऊर्वोरधः पदोरूर्ध्वं विभागेनेति च त्रिधा ।
आसनत्रयमुद्दिष्टं मन्त्रस्मरणपूर्वकम् ।। 147 ।।
द्विगुणोत्तरं रेचकादि षोडशादिक्रमेण तु ।
मात्राणां ह्रस्ववर्णस्य कालो मात्रेति शब्द्यते ।। 148।।
क्रमेणैवाभ्यसेन्मात्रां वृद्धिमेकाग्रधीः पुनः ।
रेचयित्वा दक्षिणतः पूरयित्वा च वामतः ।। 149 ।।
कुम्भकं च सुषुम्नायां विष्णुं वायुं च संस्मरेत् ।
मूलाधारं समारभ्य त्वामूर्धानमृजुस्थिता ।
मध्ये सुषुम्ना विज्ञेया वज्रिकाऽऽर्या प्रकाशिका ।। 150।।
वैद्युता ब्रह्मनाडीति सैव पञ्चप्रभेदिनी ।
पृष्ठवामाग्रदक्षान्तर्भेदास्तेषु क्रमेण तु ।। 151 ।।
हरिन्नीलः सितः पिङ्गो लोहितश्चात्र केशवः ।।
प्रद्युम्नादिस्वरूपेण ध्येयः सिद्धिमभीप्सता ।। 152 ।।

प्राणायामासनानामुक्ततारतम्यं विशदयति - **प्राणायामादय इति।** प्राणायामापरिग्रहाहिंसासत्यास्तेयब्रह्मचर्यतपः तुष्टय इत्यर्थः । अनन्तगुणा हरेः पूजेति फलभूतमोक्षस्यानन्तकालीनत्वेन विशेषतः तत्साधनपूजाया अनन्तगुणोत्तमत्वम् उपपद्यत एव इति द्रष्टव्यम् । उत्तमाधिकारि मात्रविषयत्वात् अस्य वाक्यस्य न दोष इत्यप्याहुः। धर्मक्रमः धर्महेतूनां क्रमः प्रसिद्धः । आसनत्रयस्यापि लक्षणमाह - **ऊर्वोरध इति** । पदोः पादयोः ऊर्वोरधोवस्थानं स्वस्तिकासनं ऊर्ध्व-मेवस्थापनं पद्मासनम् । एकस्य पादस्योर्वोरुपरि अन्यस्य अधः इत्येवं विभागेनावस्थानं वीरासनमिति विवेकः । रेचकादिलक्षणमाह - **मन्त्रेति।** मन्त्रस्मरणपूर्वकं मन्त्राणां षोडशादिक्रमेण द्विगुणोत्तरं यथा भवति तथा रेचकादि कर्तव्यमित्यर्थः । के ते मात्रे इत्यत आह - **ह्रस्वेति** । अकारोच्चारणकाल इति भावः । षोडशादिक्रमोऽभ्या-

दशायामिति भावेन आह - **क्रमेण इति** । रेचकादिकं कथं करणीयम् इत्यत आह - **पूरयित्वा इति** । दक्षिणातः नासापुटादिति शेषः ।। 145-149 ।।

**कुम्भकश्चेति** । **प्राणायाम इति** । वायुनिरोध इत्यर्थः । तदुक्तम् - 'त्र्यङ्गो रेचकश्चैव पूरकः कुम्भकस्त्विति' । कुम्भक इतिकर्तव्यविशेषमाह - **विष्णुम् इति** । तथा च षोडशाकारोच्चारण कालपर्यन्तं मन्त्रोच्चारणपूर्वकं दक्षिणनासापुटेन श्वासपूरणं पूरकलक्षणं द्वात्रिंशन्मन्त्रपर्यन्तं पूर्ववत् वामतः श्वासरेचनं रेचकस्य । चतुःषष्टिमात्रापर्यन्तं सुषुम्नास्थहरिस्मरणपूर्वकं नासापुटद्वयं बध्वा श्वासधारणं कुम्भकस्य लक्षणमिति भावः । अपरिग्रहादीनां शब्दार्थज्ञानेनैव लक्षणज्ञानसम्भवान्न तल्लक्षणमुक्तम् ।

केयं सुषुम्नेत्यत तद्विभागान् (तदन्तर्गत)भगवद्रूपाणि तेषां अधि[1]भूतपद्मादिकं च सप्रपञ्चं निरूपयति - **मूलाधारमित्यादिना** । मूलाधारे गुददेशं आमूर्धानं मूर्धपर्यन्तं ऋजुतया स्थिता । मध्ये देहमध्ये । वक्ष्यमाणा इडा पिङ्गलेत्यादिना मध्य इति वा । प्रद्युम्नादिस्वरूपेण इति । प्रद्युम्नः आदिः येषां रूपाणां तत् स्वरूपेण प्रद्युम्नानिरुद्धवासुदेवसङ्कर्षणरूपेण इत्यर्थः । इदम् उक्तं भवति - पृष्ठभागस्य वज्रिकायाः हरिद्वर्णः प्रद्युम्नः, वामभागगत इडा इत्यपरनामिकायामार्यानाड्यां नीलरूपोऽनिरुद्धः, पुरःस्थितायां नन्दिनीत्यपरनामिकायां प्रकाशिन्यां शुक्लवर्णो वासुदेवः, दक्षिणभागे विद्यमानपिङ्गलापरनामक वैद्युतायां पिङ्गलवर्णः सङ्कर्षणः, मध्ये ब्रह्मनाड्यां रक्तरूपो नारायणः तिष्ठति इति ध्यानं कार्यम् इति । तदुक्तं छान्दोग्यभाष्ये - 'नारायणाख्यं सौषुम्नमध्यस्थं रक्तवर्णकम् । शुक्लं तु वासुदेवाख्यं नन्दिन्यामग्रतः स्थितम्। पिङ्गलायां पिङ्गलं च रूपं सङ्कर्षणाभिधम् । पश्चिमे वज्रिकायां तु पीतं प्रद्युम्ननामकम् । इडायामनिरुद्धाख्यं नीलरूपं व्यवस्थितम्'

1. अधिष्ठानभूत इति स्याद्वा ।

इति ।। 150 - 152 ।।

पञ्चस्वपि नाडीषु तेषां स्थानविशेषमाह - **मूल इति** ।

**मूले च नाभौ हृदयेन्द्रयोनिर्भ्रूमध्यमूर्ध्निद्विषडन्तकेषु ।**
**चतुःषडष्टद्विचतुर्द्विषट्कदलेषु पद्मेषु सितारुणेषु ।**
**पञ्चात्मकोऽसौ भगवान् सदैव ध्येयो हृदन्तान्यरुणानि तानि।**
**त्रिकोणवह्नौ च षडस्रवायौ द्विस्तावदस्ररविवृत्तशशिस्थवह्नौ**
**वृत्ते विधावपि विचिन्त्यमिदं दशार्ध**
**रूपं सितं तदखिलं हृदयात् परस्थम् ।। 153 ।।**

मूले गुदप्रदेशे । इन्द्रयोनिशब्देनास्यान्ते कण्ठप्रदेशस्थाने लम्बमानो तालुदेश उच्यते । तदुक्तम् तैत्तरीये - 'एष स्तन इवावलम्बते। सेन्द्रयोनिः'। मूर्धद्विषडन्तकशब्दस्य मूर्धनि भ्रूमध्यमारभ्य द्विगुणित षडङ्गुलान्त प्रदेश इत्यर्थः । भ्रूमध्योपरि द्वादशाङ्गुलव्यवहितमूर्धोपरि प्रदेश इति यावत् । चतुःषडष्टेति द्वन्द्वान्ते श्रुयमाणो दलशब्दः प्रत्येकं सम्बध्यते। तथाच चतुर्दलषड्दलाष्टदलद्विदल चतुर्दलद्विगुणित षड्दलेत्यर्थः । सितारुणेत्युक्तम् । तत्र कानि सितानि कान्यसितानि इत्यत आह - **हृदन्तानि इति** । हृदन्त स्थानगतान्येवेत्यर्थः । एतेन तदुपरि तदुपरिगतस्थाने स्थितानि पद्मानि सितानि इति लभ्यते । तेषु स्थानेष्वेव विद्यमानमण्डलान्याह - **त्रिकोण इति** । त्रिकोणवह्नौ वह्नि मण्डले । एतन्मूलगतपद्मोपरि स्थितं वायुमण्डलं नाभिपद्मगतं द्विस्तावदस्ररविवृत्तशशिस्थवह्नौ द्विगुणितानि तावन्ति षट्सङ्ख्याकान्यस्राणि यस्य स तथोक्तः । स चासौ रविश्च द्विस्तावदस्र रविः । वृत्तश्चासौ शशी च । द्विस्तावदस्र रवौ वृत्तशशी तस्मिंस्थितश्चासौ बहिश्च तस्मिंद्वादशास्रे मण्डलोऽस्ति । यत् चन्द्रमण्डलं तत्र स्थित वह्नि मण्डलमित्यर्थः । उपर्युपरि स्थितत्तन्मण्डलत्रयं हृदयस्थान गताष्टपञ्चोपेत पद्मगतमिति बोद्धव्यम् । यथोक्तं प्रणव कल्पे । 'हृतपद्ममध्ये

सूर्येन्दुवह्निगम्' इति । तृतीयस्कन्धे च - 'हृत्पुण्डरीकमष्टपत्रम्' इत्युक्त्वा 'कर्णिकायां न्यसेत् सूर्यसोमाग्नीनुत्तरोत्तरम्' इत्यभिहितम् । वृत्तं च द्वयं इन्द्रयोनिभ्रूमध्यमूर्धाख्यस्थानत्रयगतपद्मेषु पृथक् पृथक् स्थितमिति मन्तव्यम् । हरिन्नील इत्यत्र उक्तहरिद्वर्णमूलनाभिहृदयेषु स्थितरूपपञ्चकस्यैव इन्द्रयोनिभ्रूमध्यमूर्धाख्यस्थानत्रये पृथुक् स्थितं रूपपञ्चकं स्वाधिष्ठानशुक्लपद्मचन्द्रमण्डलानुसारेणाखिलमपि शुक्लवर्णमेवेत्याह - **सितमिति** । तथा च अयं समुदायार्थः । मूलस्थाने वज्रिकाद्यासु पञ्चस्वपि नाडीषु चतुर्दलानि रक्तवर्णानि पद्मानि वर्तन्ते। तेषु त्रिकोणं वह्निमण्डलपञ्चकमस्ति । तत्रोक्तक्रमेण हरितादिवर्णयुक्तानि प्रद्युम्नानिरुद्धसङ्कर्षणवासुदेवनारायणरूपाणि पृष्ठवामाग्रेत्युक्तक्रमेण वर्तन्ते । नाभावपि नाडीस्थरक्तवर्णषडदलोपेतपद्मपञ्चके स्थित षडस्रवायुमण्डलेषु उक्तवर्णानि प्रद्युम्नादीनि रूपाणि सन्ति । एवं हृदयगत नाडीस्थाष्टदलयुक्तवर्णानि पञ्चपद्मानि तत्रोपर्युपरिस्थितेषु द्वादशास्रवृत्तत्रिकोणेषु सूर्यसोमहुताशमण्डलेषूक्तवर्णानि तानि रूपाणि तिष्ठन्ति । इन्द्रयोन्यां विद्यमानेषु द्विदलशुक्लवर्णपद्मेषु स्थितवृत्तचन्द्रमण्डलपञ्चके शुक्लवर्णानि प्रद्युम्नादिरूपाणि वर्तन्ते । इयं भ्रूमध्यगतचतुर्दलपद्मेष्वपि भ्रूमध्यापेक्षया द्वादशाङ्गुलव्यवहितशिरोमध्यनाडीपञ्चकगतशुक्लवर्ण द्वादशास्रपद्मेषु वर्तुले मण्डलपञ्चकेषु उक्तवर्णान्युक्तरूपाणि वर्तन्त इति ।। 153।।

एवंविधसुषुम्नायाः परितो विद्यमान नाडीराह - **इडा इति** ।

**इडा च पिङ्गला चैव वज्रिका धारिणी तथा ।**
**सुषुम्नायाश्चतुर्दिक्षु वज्रिकाद्यासु तत्र च ।। 154 ।।**
**चतुर्मूर्तिः स भगवान् हृदये संव्यवस्थितः ।**
**द्वासप्ततिसहस्राणि नाड्योऽन्यास्तु प्रधानतः ।। 155 ।।**

एतेषु विद्यमानरूपाण्याह - **वज्रिकाद्यास्तु इति** । न केवलं पञ्च-

मूर्तिः सन् भगवान् वज्रिकाद्यासु सुषुम्नावान्तरनाडीषु वर्तते । किन्तु तत्र च इडाद्यासु च चतुर्मूर्तिः सन् हृदये व्यवस्थित इत्यर्थः । अथवा तत्र इडाद्यासु चर्तुषु वासुदेवादिचतुर्मूर्तिः स भगवान् वज्रिकाद्यासु वज्रिकादि क्रमोपेतासु व्यवस्थितः न केवलं सुषुम्नायाम् इति च शब्दार्थः क्रमेणं स्थित इति प्रतीयते तां वारयतुं वज्रिकादिक्रमोपेतास्वित्युक्तम्। तथा च अग्रे वज्रिकायां वासुदेवः दक्षिणे धारिण्यां सङ्कर्षणः पृष्ठ इडायां प्रद्युम्नः वामे पिङ्गलायामनिरुद्धो वर्तत इति भावः । अपरा अपि नाडीस्तत्र विद्यमानानि भगवद्रूपाणि च आह - **द्वासप्तति इति** । देह इति शेषः । ननु 'शतं चैका च हृदयस्य नाड्यः', 'तत्रैतदेकशतं नाडीनाम्' इत्यादौ एकशतनाडीनामेवोक्तेः कथं द्वासप्ततिसहस्राणि इति उक्तमित्यत आह - **अन्यास्तु प्रधानत इति** । अन्यत्रैकशतादित्वेनोक्तिस्तु तासां प्राधान्याभिप्रायेण इति भावः। प्रधानतः सुषुम्नाया अन्या द्वासप्ततिसहस्राणि सन्ति इत्यर्थः । प्रधानतो द्वासप्तति सहस्राणि इति वाऽर्थः ।

'बृहतीसहस्रस्पर्शानाम्' इति बृहतीसहस्रसम्बन्धिनीनां ऋचां वाच्यः केशवः अत्र नाडीषु वर्तत इत्यदोषः । **द्वासप्तति इति** ।

**बृहतीसहस्रस्पर्शानामृचां वाच्योऽत्र केशवः ।**
**रूपाणां लक्षणं तेषां रहस्यत्वान्न कथ्यते ।**
**विष्णुना ब्रह्मणे प्रोक्तं ग्रन्थसङ्कोचतस्तथा ।। 156 ।।**

सप्तति सहस्रनाडीषु षड्विंशत् द्वासहस्रनाड्यो दक्षिणभागस्था तावत् सङ्ख्याका वामभागस्थाः । बृहतीसम्बद्धऋचां वर्णाश्च षड्-त्रिंशत्सहस्रसङ्ख्याकाः । ताश्च स्वरव्यञ्जनभेदेन द्विविधाः । एवं च पुरुषायुर्मानभूतस्य संवत्सरस्याह्नां षड्त्रिंशत्सहस्रसङ्ख्याकानां यानि नियामकानि भगवतः षट्त्रिंशत्सहस्रं पुंरूपाणि तान्येव बृहतीसहस्र-प्रतिपाद्यानि । तान्येव दक्षिणभागगतनाडीषु वर्तन्ते । यानि षट्त्रिंशत्

सहस्रसङ्ख्याकानां शतसंवत्सररात्रीणां नियामकानि तानि भवन्ति । भगवतः स्त्रीरूपाणि तान्येव बृहतीसहस्रव्यञ्जनप्रतिपाद्यानि ।

**विष्णुना इति** । तान्येव वामभागस्थितषट्त्रिंशत्सहस्रनाडीषु वर्तन्त इति । तत् च ऐतरेयभाष्यादौ स्पष्टम् । रहस्यत्वादेवाकथनम् नाज्ञानादित्याशयेन आह - **विष्णुना इति** । स्वस्यापि चतुर्मुखसदृशत्वेन तज्ज्ञानमस्ति इति तात्पर्यम् । यद्वा रहस्यत्वे हेतुमाह - **विष्णुनेति** । तथा च उत्तमाधिकारिव्यतिरिक्तानां तदनधिकारित्वेन रहस्यत्वमिति भावः। अकथने निमित्तान्तरमाह - **ग्रन्थेति** ।। 156 ।।

एवं ध्यानाङ्गभूतयमादीनां स्वरूपं प्रासङ्गिकं सविस्तरं निरूप्य लक्षणकथनपूर्वकं ध्यानविभागमाह - **खण्डस्मृतिः इति** ।

**खण्डस्मृतिर्धारणा स्यादखण्डा ध्यानमुच्यते ।**
**अप्रयत्नात् समाधिश्च दर्शनं चिरयाऽनया ।**
**अथवा सततं शास्त्रविमर्शेन भविष्यति ।। 157 ।।**
**परमस्नेहसंयुक्तयथार्थज्ञानतो भवेत् ।।**
**सा भक्तिरिति विज्ञेया साधनं भोगमोक्षयोः ।। 158।।**
**मुख्यमेषैव नान्यत् स्यात् सर्वं व्यर्थं तया विना ।**
**सैकाऽप्यभीष्टफलदा मोक्षो दर्शनयुक्तया ।। 159 ।।**

एकैकाङ्गस्मृतिर्धारणा स्यात् । अखण्डयावदङ्गस्मृतिर्ध्यानमित्यर्थः। अथवा खण्डा स्मृतिः किञ्चित् कालं स्मृतिः । क्वचित्तदभाव इति यावत् । अखण्डध्यानार्थं प्रयत्नकरणे बहुकालानुवृत्तस्मृतिर्ध्यानमित्युच्यत इत्यर्थः । समाधिस्तु अप्रयत्नात् ध्यानार्थप्रयत्नमकृत्वापि प्राप्तसन्ततानुवृत्ता विशिष्टाङ्गस्मृतिः स्यात् इत्यर्थः । निदिध्यासनविशेषध्यानस्य विष्णुशास्त्रावमर्शनस्य अपरोक्षज्ञानसाधनत्वं इतिकर्तव्यताकथनपूर्वकमाह - **अथवा इति** । अथवा अपरोक्षदृशेरेव इत्यत्र

निदिध्यासनाया यदपरोक्षज्ञानसाधनत्वमुदितं तत्प्रधानत्वाभिप्रायेणैव प्रधानवत् । भक्तिस्वरूपकथनपूर्वकं भक्त्या अपरोक्षज्ञानमाह - **परम इति** । भवेत्तद्वतां दर्शनमित्यनुवर्तते । न केवलं दर्शनस्यैव मुख्यसाधना भक्तिः अपि तु तत्साध्यमोक्षस्य तत्रातिशयानन्दभोगस्यापि इत्याह - **साधनम् इति** । मुख्यत्वमेव व्यतिरेकेण च अन्वयेन चोपपादयति - **नान्येति** । मुख्यं साधनमिति वर्तते । नान्यत्स्यादित्युक्तविवरणं **सर्वमिति** । भक्तेः मुख्यसाधनत्वमुदितम् । तत् किं केवलाया इत्यत नेति भावेन आह - **मोक्ष इति** । भवेदिति शेषः ।। 157 - 159 ।।

तर्हि दर्शनभक्त्योः किमप्रधानभावेन इति शङ्कां वारयन् भक्तेरुत्तमत्वमेव स्पष्टयति - **दर्शनेति** ।

**दर्शनं च तया हीनं व्यर्थमन्यत् किमुच्यते ।**
**योग्यं तु दर्शनं नैव तया हीनं भविष्यति ।। 160 ।।**
**आनन्दचित्सदिति पूर्वगुणैः समस्तैः**
**मर्त्यादिभिर्विधिपरैर्भगवान् क्रमेण ।**
**ध्यातोऽधिकैरधिगुणोऽधिकमेव सौख्यं**
**मुक्तौ ददाति सततं परमस्वरूपः ।। 161 ।।**

अन्यत् भक्तेरन्यत् किमुच्यते (अन्यत् साधनं न) । किं वक्तव्यम् । न वक्तव्यमेवेत्यर्थः । ननु भक्त्यभावे अपरोक्षज्ञानमेव नोत्पद्यते । कथमुच्यते दर्शनं च तया हीनम् इति इत्यत आह - **योग्यम् इति** । तथा अत्र दर्शनं चेत्यत्रोक्तं सामान्यदर्शनमेव । (तत्तु सम्पूर्णभक्त्यभावेऽपि भवति इति भावः) । 'आचार्यं देवेशं च इत्यत्र उक्ताचार्यस्य यथा परम्प(र)या मोक्षसाधनत्वं तथा देवस्यापि किमित्यतो नेत्याशयेनोक्तैः भक्त्यादिभिः साधनैः प्रसन्नः श्रीनारायण एवानन्ययोगेन मोक्षादिप्रद इत्येतमर्थमुपपादयन् सर्वेषामधिकारिणां न साम्येनानन्दः किन्तु तरतमभावेन इति सहेतुकं दर्शयति - **आनन्द इति** । भगवानेव

मुक्तौ सौख्यं ददाति इत्यन्वयः । तत् कुत इत्यत आह - **स्वरूप इति।** सर्वोत्तमत्त्वं च कादाचित्कं चेत्तस्य न सर्वकालेषु मोक्षदातृत्वं अत उक्तम् - **सततं परमस्वरूपः इति** । उक्तासम्भवनिवृत्त्यर्थम् - **सततमधिगुण इत्युक्तम्** । ऐश्वर्याद्युपलक्षितागण्यगुणप्रतिपादक-भगवत्शब्द एव अत्र मानम् इत्याशयेन भगवानिति पदप्रयोगः । साम्येन ददाति किमित्यतो नेत्याह - क्रमेण ध्यानं यथाधिकं भवति तथा ददाति इति । ननु वैषम्यनैर्घृण्ये स्यातामित्यत उक्तं मर्त्यादिभिः विधिपरैः समस्तैरधिकारिभिः क्रमेणाधिकं ध्यात इति । कथं ध्यात इत्यत उक्तम् - **आनन्देति** । आनन्दं चिद् ज्ञानं सत्वं निर्दुष्टत्वम् इत्येते गुणा एव पूर्वेषां गुणानां तैः स्वामित्वादिगुणैः क्रमेणाधिकैः सहितत्वेन ध्यात इत्यर्थः । अत्र मनुष्योत्तमैरानन्दज्ञाननिर्दुष्टत्व-स्वामित्वरूपचतुर्भिर्गुणैर्ध्यातः उत्तमैस्तु क्रमेणाधिकैः बहुगुणैः । ब्रह्मणा त्वखिलश्रुत्युक्तसम्प्रदायागताखिलगुणैः च इति विवेकः । गुणग्रहणं रूपाद्युपलक्षणम् । तथा च साधनानुसारेण फलदातृत्वादीश्वरस्य साधनस्योपलक्षणस्य क्रमिकत्वान्न भगवतो वैषम्यादिदोषः । ननु तादृशसाधनस्यापि ईश्वरायत्तत्वाद्वैषम्यादि तादवस्थ्यमित्यतः क्रमे-णाधिकैरित्यधिकारिविशेषणम् । तथा च अधिकारापरनामिक-योग्यतायाः तेषु क्रमिकत्वात् तदनुसारेण फलदातुर्हरेर्नोक्तं दोष इति भावः । तादृश योग्यतादातृत्वेनाऽपि पुनर्वैषम्यादि तादवस्थ्यं तु 'ततोऽन्यत्तु अवैषम्यादिनामकम्' इत्यनुव्याख्यायां निरस्तम्। ननु मौक्तानन्दस्यानित्यत्वेऽपुरुषार्थत्वं स्यात् इत्यतः - **सततमविनाशि इति** सौख्यविशेषणम् । सन्ततं ददाति इति वा सम्बन्धः । प्रतिक्षणं ददाति इति सौख्यान्तर्गतः सन् तत्सत्तादिनियमन पूर्वकं तस्यानुभूयमानत्वादिकं ददाति इति भावः ।। 160 - 161 ।।

एवं कृततन्त्रसारो भगवानधिकारिणामादरजननाय पुनरास्ति-कपूर्वकत्वं सूचयन् स्वनामकथनपूर्वकं स्वेन ग्रन्थः कृत इत्याह - **निर्दोष इति** ।

निर्दोषाखिलसम्पूर्णगुणेन हरिणा स्वयम् ।
ब्रह्मणे कथितात्तन्त्रसारादुद्धृत्य सादरम् ।। 162 ।।
आनन्दतीर्थमुनिना कृतो ग्रन्थोऽयमञ्जसा ।
ग्रन्थोऽयं पाठमात्रेण सकलाभीष्टसिद्धिदः ।
किमु ज्ञानादनुष्ठानादुभयस्मात् पुनः किमु ।। 163 ।।
यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
वट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपु-
र्मध्वो यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ।।164

एतद् ग्रन्थस्योत्तमत्वादवश्यं अभ्यसनीयम् इत्याशयेन आह - **ग्रन्थोऽयम् इति । किमु ज्ञानात् इति ।** ग्रन्थार्थज्ञानात् सकलाभीष्ट-सिद्धिर्भवति इति किमु वक्तव्यम् इत्यर्थस्य अनुष्ठानादनुष्ठेयज्ञान-मात्रेणानुष्ठानादि किमु इति सम्बध्यते । उभयस्मात् । ज्ञानादनु-ष्टानाच्चेत्युभयस्मात् किमु वक्तव्यम् इति शेषः । अथवानुष्ठानादिति ज्ञानपूर्वकानुष्ठानादित्यर्थः । उभयस्मादिति । ज्ञानपूर्वकानुष्ठाना-च्चेत्युभयस्मादित्यर्थः । एवं समापितग्रन्थो भगवान् सर्वदिवचूडामणि-विज्ञानमहादिवाकरः श्रीमदाचार्यवर्यः यथा भगवत्स्वरूपज्ञानं मोक्षाद्यशेषपुरुषार्थसाधनं तथा स्वस्वरूपज्ञानस्याप्यशेष पुरुषार्थान्तरङ्ग कारणत्वेन बडित्यादि सकलश्रुतिस्मृतिप्रसिद्धमात्मस्वरूपं ज्ञाना-धिकारिणामाविष्कुर्वन् स्वकृतं ग्रन्थप्रवरं सर्वसत्कर्मपूज्ये भगवति जग-ज्जनके श्रीनारायणे समर्पयति - **यस्य त्रीणि इति ।** श्लोकराजोऽय-मस्मदादिभक्तजनाभीप्सितज्ञानभक्त्यादिसकलपुरुषार्थप्रकर्षक कल्पद्रुमैः मध्वसिद्धान्तस्थापनाचार्यैर्न्यायसुधायां सम्यग्व्याख्यातः प्रपञ्चितः न्यायसुधागूढवाक्यार्थविवृतौ तदर्थस्तत्रैव द्रष्टव्यः ।। 162-164 ।।

स्वस्वरूपप्रकटनेन ग्रन्थसमाप्तिमरोचयमानोऽन्ते भगवन्माहात्म्यमुपदर्शयन्नमति - अशेष इति ।

**अशेषदोषोज्झितपूर्णसद्गुणं सदा विशेषावगतोरुरूपम् ।**
**नमामि नारायणमप्रतीपं सदा प्रियेभ्यः प्रियमादरेण**
**।। 165 ।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमत्तन्त्रसारसङ्ग्रहे चतुर्थोऽध्यायः सम्पूर्णः ।।**

अशेषदोषोज्झितश्चासौ पूर्णसद्गुणश्चेति विग्रहः । विशिष्यन्त इति विशेषाः । तैर्ज्ञानानन्दाद्यपरमितैर्विशेषवत्तया अवगतं उरु उत्कृष्टं पूर्णं वायुस्वरूपं यस्य तत् तथोक्तम् । अप्रतीपमप्रतिद्वन्द्वम् । असदृशमिति यावत् ।

**नमो नमोऽशेषसुमन्त्रतन्त्रपूज्याय देवाय रमारमाय ।**
**नारायणायाद्भुतविक्रमाय सद्ज्ञानपूर्णाय कृपाकराय ।।**
**शर्वादिगीर्वाणगुरुं रमेशपादाब्जभृङ्गं जगदेकवन्द्यम् ।**
**स्वानन्दतीर्थार्यवरं महान्तं वन्दे सदाऽगण्यगुणं कृपाब्धिम् ।।**
**श्रीविठ्ठलार्यान् करुणाकरान् सदा**
**श्रीमध्वशास्त्राब्धिविहारसक्तान् ।**
**श्रीकृष्णपादाम्बुजषट्पदानहं**
**गुरून् प्रपद्ये शरणं शरण्यान् ।।**
**विठ्ठलाचार्यवर्याख्यान् भूयोभूयो नमाम्यहम् ।**
**यत्पादस्मृतिमात्रेण मनो मे सम्प्रसीदति ।।**

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमत्तन्त्रसारसङ्ग्रहटीकायां विठ्ठलाचार्यपुत्रेण श्रीनिवासविदुषा विरचितायां गूढार्थसङ्ग्रहाख्यायां चतुर्थोऽध्यायः ।।

**।। श्री कृष्णार्पणमस्तु ।।**

# सनत्कुमारप्रणीतं गृहवास्तुशास्त्रम्

(मङ्गलाचारणम्)

व्रह्मा शक्रो यमश्चैव भार्गवाङ्गीरसावुभौ ।
गौतमश्चैव गार्ग्यश्च मनुर्व्यासो भृगुस्तथा ।। 1 ।।

विश्वकर्मप्रभृतयो वास्तुविद्याविशारदाः ।
सर्वैश्च यत्कृतं शास्त्रं सारमुद्धृत्य यत्नतः ।। 2 ।।

सनत्कुमारो मतिमान्नमस्कृत्य स्वयंभुवम् ।
वक्ष्यते यत्कृतं शास्त्रं वास्तुशोभनमुत्तमम् ।। 3 ।।

(चान्द्रमासरीत्या गृहनिर्माणफलम्)

गृहसंस्थापनं चैत्रे धनहानिर्महद्भयम् ।
वैशाखे शुभदं विद्याज्ज्येष्ठे तु मरणं ध्रुवम् ।। 4 ।।

आषाढे गोकुलं हन्ति श्रावणे भृत्यवर्धनम् ।
भाद्रपदे प्रजापीडा आश्विजे कलहं तथा ।। 5 ।।

कार्तिकि धनलाभं स्यान्मार्गशीर्षे महद् भयम् ।
पुष्ये चाग्निभयं विद्यान्माघे च वहुपुत्रवान् ।। 6 ।।

फाल्गुने रत्नलाभं स्यान्मासानां च शुभाशुभम् ।
माघे वैशाखमासे तु कार्तिक्यां श्रावणे तथा ।
अन्यमासं परित्यज्य चातुर्मासं गृहोत्तमम् ।। 7 ।।

(सौरमासे गृहनिर्माणफलम्)

गृहसंस्थापनं सूर्ये मेषस्थे तु महाद्भयम् ।
वृषभे धनलाभं स्यान्मिथुने मरणं ध्रुवम् ।
कुळीरे पशूनाशं स्यात्सिंहे तु वहुपुत्रदम् ।। 8 ।।

कन्या रोगं तुला सौख्यं वृश्चिके धनवर्धनम् ।
महाहानिस्तु धनुषि मकरे वाग्निजं भयम् ।। 9 ।।

कुम्भे तु रत्नलाभं स्यात् मीने सर्वभयावहम् ।
स्थिरराशिस्थिते सूर्ये शोभनं गृहकर्मसु ।। 10 ।।

चरे तु मध्यमं विन्द्यात् द्विस्वभावे तु निन्दितम् ।
गुरुभार्गवयोर्मौढ्ये बाल्यवृद्धत्वयोरपि ।। 11 ।।

चातुर्मास्ये शून्यमासे गृहकर्म न कारयेत् ।
गृहारम्भप्रवेशाख्यं न कुर्यात्कर्मश्रावणे ।
सिंहश्रावणमासे तु शुभदं परिदृश्यते ।। 12 ।।

(द्वारसंयोजनकालः)

कर्मी मकरहारिकुम्भगतेऽर्के
पूर्वपश्चिममुखानि गृहाणि ।
मेषतौळिवृषवृश्चिकया ते
दक्षिणोत्तरमुखानि च कुर्यात् ।। 13 ।।

अन्यधा यदि करोति दुर्मति -
र्व्याधिशोकभयनाशमश्नुते ।
मीनचापमिथुनाङ्गनमासे
कारयेन्न गृहमेव भास्करे ।। 14 ।।

(वासरभेदेन फलभेदः)

शशि कलहमरिष्टम्भास्करे चाग्निदाहं
ह्यशुभमिति च मन्दे भूमिपुत्रो विनाशम् ।
कविगुरुबुधवाराः स्तम्भभूते प्रशन्ताः
इति भवति मुनीन्द्रैर्मानवानां गृहाणि ।। 15 ।।

सोमे शुक्रे सदा सौख्यं बुधे जीवे च वित्तदम्
कुजे सूर्ये सदा दुःखं मन्दे तस्करवाधकम् ।। 16 ।।

(गृहनिर्माणे प्रशस्तनक्षत्राणि)

मृगशिर करपूषापौष्यमित्रात्तरार्या
श्रवण दितिज लेशा वासवे दस्त्रभेषु
वहुनुतधनवंतो स्तम्भनं स्थापनं स्या -
दिति वदति मुनीन्द्रो मानवानां गृहाणि ।। 17 ।।

श्रवणाषाढयोश्चैव रोहिणी चोत्तरात्त्रयम् ।
आश्लेषा मृगशीर्षं च गुरुणा सह संयुतम् ।।
गुरुवारे कृतं वेश्म राजयोगं तदुच्यते
तद्गृहे राजपुत्रस्स्याद्राज्यं भवति निश्चयम् ।। 18 ।।

अश्विनी शततारा च विशाखार्द्रा च चित्तकम् ।
धनिष्ठा दितिभे शुक्रे संयुते शुक्रवासरे ।। 19 ।।

गृहं नाटकशालां च देवागारं कृतं शुभम् ।
तद्वेश्मनि प्रमोदस्तु चन्द्रवत्तुष्टिमाप्नुयात् ।। 20 ।।

अनूराधा च भरणी स्वाती ज्येष्ठा च भद्रकम् ।
धनिष्ठा षट्सु ऋक्षासु संयुते च शनैश्चरे ।। 21 ।।

शनिप्रमादयोगोऽयं धनधान्यादि सङ्ग्रहम् ।
तस्मिन् गृहं न कर्तव्यं चोरबाधा भवेद् ध्रुवम् ।। 22 ।।

मघा च रेवती चैव कृत्तिका पुष्य एव च ।
पूर्वफल्गुनि हस्ता च मूलं चैव तु सप्तकम् ।। 23 ।।

भूमिजातेन संयुक्तं कृतं नैव तु मन्दिरम् ।
अग्निना दह्यते क्षिप्रं पुत्रनाशं च जायते ।। 24 ।।

(प्रशस्तकाल एव गृहारम्भः कार्यः)

सुदिने वारनक्षत्र सुयोगकरणान्विते ।
चंद्रानुकूलं प्राप्ते तु सुलग्ने शुक्लपक्षके ।। 25 ।।

गृहारम्भः प्रकर्तव्यश्शुभमासे तु सर्वदा ।
शुक्लतृतीयामारभ्य यावत्कृष्णा तु सप्तमी ।। 26 ।।

शुक्लपक्षमिति ज्ञेयं शेषं कृष्णमुदाहृतम् ।
कृशानुनक्षत्रगते च भानौ
शुक्ले विधौ वैष्णवकुम्भसंस्थे ।
सदारुसम्भेदनग्राह्यबन्धान्
कुर्वीत वेश्मादि न कर्मसिद्धिम् ।। 27 ।।

कृष्णपक्षस्थतिथिषु मकरांतेषु पञ्चषु ।
रोहिणी सहिते चाह्नि बर्बरोऽपि न चातुरः ।। 28 ।।

कन्यादिमासत्रितये चतुष्के वास्तुशायिनः ।
प्राच्यादिपश्चिमोदीच्यां शिरो वास्तु यथाक्रमम् ।। 29 ।।

नभस्यादिषु मासेषु त्रिषु त्रिषु यथाक्रमम् ।
पूर्वादिपश्चिमे वामपार्श्वशाया प्रदक्षिणम् ।। 30 ।।

(वास्तुपुरुषस्थितिः पर्यालोचनीया)

यन्मुखं वास्तुपुरुषो कुर्यात्तद्वन्मुखं गृहम् ।
प्रतिकूलमुखे गेहे शोकरोगभयावहम् ।। 31 ।।

(शङ्कुस्थापनकालः)

पुत्रस्य नाशश्शिरसि प्रभूते
स्त्रियः क्षयः पादतलप्रभूते ।
भूते तु पृष्ठे भयरोगपीडा
स्त्रीपुत्रलाभं च धनं च कुक्षा ।। 32 ।।

नवभागं गृहक्षेत्रं कुर्यान्मध्यं त्रिधा पुनः ।
भागद्वयमधोभागे शेषं नाभिः प्रकीर्तिता ।। 33 ।।

(गृहनिर्माणक्रमः)

पूर्वदिशि स्नानगृहमाग्नेय्यां पाकमन्दिरम् ।
दक्षिणे चैव शयनं नैऋत्ये चायुधं गृहम् ।। 34 ।।

पश्चिमे भोजनगृहं वायव्ये पशुमन्दिरम् ।
भण्डारं चोत्तरदिशि ईशान्ये देवमन्दिरम् ।। 35 ।।

(ध्वजाद्यायफलम्)

ध्वजे कृतार्थी मरणं च धूमे
सिंहे जयं श्वानमनन्तरोगमे ।
वृषे च राज्यं खरदुःखंभाजं
गजे सुखं वायसनिष्फलं च ।। 36 ।।

धनलाभं ध्वजे विन्द्याद्धूमे च कलहं भवेत् ।
सिंहे च विजयं नित्यं श्वाने हानिर्भविष्यति ।। 37 ।।

धनलाभं वृषे चैव खरे राजभयं भवेत् ।
गजे वृद्धिश्च जानीयाद्वायसे शून्यमादिशेत् ।। 38 ।।

सिंहे वृषे गजे चैव स्वस्थानेषु सुखावहः ।
धूममेकं परित्यज्य ध्वजे सर्वत्र पूजयेत् ।। 39 ।।

(राशिविशेषे गृहनिर्माणप्रतिषेधः)

न गृहं वृश्चिके पूर्वे धूमं मीने क्षयं भवेत् ।
कन्यायां दक्षिणे नाशं नैऋत्यां नाशकर्मसु ।। 40 ।।

धनुषि वरुणश्चैव पवने मरणं तथा ।
वृषभे मिथुने सिंहे मकरे च चतुर्थके ।। 41 ।।

ब्रह्मस्थानं ध्रुवं मृत्युरन्यस्थानं शुभावहम् ।
मेषे सिंहो धनुः पूर्वे याम्ये कन्यामृगोवृषः ।
तौळि कुम्भघटः पश्चात् कर्मी मीनाळिचोत्तरे ।। 42 ।।

गृहाधिपतिराशेस्तु रिच्छाष्टनववर्जिताः ।
राशयश्शुभदा प्रोक्ता गृहस्य मुनिभिस्सह ।। 43 ।।

स्वगणं चोत्तमं प्रोक्तं मध्यमं दैवमानुषम् ।
दैवं च राक्षसं चैव कलहं स्यात्सदा गृहे ।। 44 ।।

मानुषं राक्षसं चैव मृत्युराप्नोति च ध्रुवम्
राक्षसं मानुषं चैव गृही च ऋणवान् भवेत् ।। 45 ।।

(दिग्विशेषोन्नतेः फलम्)

शोभनं धनलाभं च शोकं मरणमेव च
चतुर्दिक्षु च विज्ञेयं दक्षिणादिषु चोन्नतम् ।। 46 ।।

ब्रह्मक्षत्रिययोर्भित्तिरुच्यते दश एव च ।
विट्छूद्रा नव विज्ञेयं प्राग्देशे प्राकृतेष्वपि ।। 47 ।।

भित्तिर्विदार्यमाणा तु चार्थैरर्थविनाशनम् ।
बहिर्गता तु या भित्तिर्गृहस्थस्य भयावहम् ।। 48 ।।

अभ्यन्तरगतासैव स्त्रीणां मृत्युभयं भवेत् ।
लोष्टं बाहुल्यभित्तौ तु कृषिदारिद्र्यमादिशेत् ।। 49 ।।

नातिस्थूलं नातिकृशं नात्युच्चं नातिकुब्जकम् ।
मस्तद्वयप्रमाणेन भित्तिं कुर्याद्विचक्षणः ।। 50 ।।

मुखजानुप्रमाणं तु धनसौख्यविवर्धनम् ।
वंशाग्रलग्नमासीत माया मे ध्वजमुत्तमम् ।। 51 ।।

स्वाम्यङ्गुष्ठप्रमाणेन नयेद्भूमौ प्रमाणतः ।
धूमे चाग्निभयं चैव श्वानाये तु धनक्षयः ।। 52 ।।

खरे तु कहलं चैव ध्वाङ्क्षे सर्वभयावहम् ।
स्वदिक्षु स्वयमेव स्यात् ध्वजस्सर्वत्र पूजितः ।
एवं ज्ञात्वा गृहं कुर्यात् पूर्वे दिक्षु प्रमाणतः ।। 53 ।।

(अष्टधा गृहप्रमाणम्)

पाञ्चाल वैदेहिक कौरवाख्यं
राजन्यकं मागध शूरसेने ।
तथा सगान्धारमवन्तिकाख्य
मित्यष्टकं चैव गृहप्रमाणम् ।। 54 ।।

देवागारेष्ववन्ति स्यात् गान्धारं हस्तिशालकम् ।
शूरसेनं वृषाणां च द्विजानां मागधं तथा ।। 55 ।।

कौरव्यं वैश्यजातेस्तु शूद्रैर्वैदेहिकं तथा ।
सकृत्पाञ्चालिकं चैव कौरव्यं सर्वजातिषु ।। 56 ।।

गृहविस्तारकं सूत्रं चतुष्कृत्वा प्रयत्नतः ।
तत्रैकेन लमायुज्यमध्यमुद्धृत्य यत्नतः ।। 57 ।।

तत्र तेन प्रमाणेन प्लवपांचालमुच्यते ।
सार्धाङ्गुलिद्वयेनैव एकैकमधिकं कुरु ।। 58 ।।

वैदेहं कौरवं चैव राजन्यं मागधं तथा ।
शूरसेनं च गान्धारं प्लवं चावन्तिकं तथा ।। 59 ।।

सर्वमेकत्र संयुक्तं सार्धं सप्तदशाङ्गुलम् ।
प्लवप्रमाणकं प्राह शौनको मुनिपुङ्गवः ।। 60 ।।

अकवाटादिविच्छिन्नमकृत्वा बलिभोजनम् ।
गृहप्रवेशं कुरुते शोकरोगभयप्रदम् ।। 61 ।।

तस्मिन् विभवसाध्यं च गृहं कुर्यात्प्रमाणतः ।
तथा तस्मिन्न भवति दोषो भवति निश्चयः ।। 62 ।।

(द्वारपरिमितिकथनम्)

अत्युच्चं चेच्चोरभयमतिहीने क्षुधाभयम् ।
चतुष्षष्ट्यङ्गुलोत्सेधं चतुस्त्रिंशच्च विस्तरम् ।। 63 ।।

उत्सेधनं स्वभागं स्याद्विस्तारं पञ्चभागतः ।
द्वाराणामपि सर्वेषां द्वारबन्धं प्रमाणतः ।। 64 ।।

प्रवेशे जन्मराशिनां मुखं दक्षिणतश्शुभम् ।
पृष्ठतो वा मृतिश्चैव कार्याहनिर्धनक्षयम् ।। 65 ।।

(दिग्भेदेन द्वारफलभेदः)

नवभागं गृहं कुर्यात् पश्चिमे याम्यपंचके ।
श्रीभागं चोत्तरं पूर्वं शेषं द्वारं प्रकल्पयेत् ।
हानिर्निस्सत्वमर्थाप्तिर्नृपपूजा महाधनम् ।। 66 ।।

अतिशोकमतिक्रोधं भीतिर्दिशि शचीपतेः ।
निर्धनं बन्धनं भीतिरर्थाप्तिर्धान्यवर्धनम् ।। 67 ।।

अनातङ्कं व्याधिभयं निस्सत्वं दक्षिणे दिशि ।
पुत्रहानिश्शत्रुवृद्धिः लक्ष्मीप्राप्तिरनागमम् ।। 68 ।।

सौभाग्यमतिदौर्भाग्यं दुःखं शोकं च पश्चिमे ।
कलत्रनिन्दा निस्सत्वं हानिर्धान्यधनागमम् ।
सम्पद्वृद्धिर्महाभीतिरामयो दिशि चोत्तरे ।। 69 ।।

मीनवृश्चिककर्किणीशक्रे
मकराङ्गनमन्मथयाम्यदिशि ।
वारुण्यां वृषतुलाकुम्भे
अजहरधन्वि उत्तरपृथ्वि ।। 70 ।।

भूदीर्घाः परिणाहचाहुगुणितो वस्वग्निनंदाप्टके -
र्नन्दाप्टाब्धिशरर्तुभिश्च गुणितो भुक्तावशेषाः क्रमात् ।
मार्ताण्डद्विपदन्तिवद्यचलभज्योतिस्तुरङ्ग्रहे
स्वर्णयस्थितिवारभानि च तथा योगार्थतिथ्यन्तकाः ।।71



# HOUSE CONSTRUCTION AS DEPICTED IN SANATKUMARA VASTU SHASTRAM

## (GIST OF THE TEXT)

**The greatness of Vastu Science :**

For ages, we have seen the stout and artistic construction of temples and palaces in our country. The majestic existence of temples with 5-6 centuries of antiquity proves the all time greatness of Vastu science. It is impossible to explain the non-destruction of temples and houses without Vastu science's greatness at its background. Thus, it seems relevant and useful to make a comparitive study of Vastu science which serves as a format for house construction. The present article aims at providing little information regarding house construction as depicted in Sanatkumara Vastu sciences.

The very word, Householder, propounds the person in a house who serves as the caretaker of students, sages and monks. *Bhavishya Maha Purana* says that the construction of house seems very essential since all the good deeds of a householder are carried on in the house. The Vedic rites performed in other's house give results to the owner of the house and hence, it is necessary to construct a own house to perform Vedic rites.

'गृहस्थस्य क्रियाः सर्वाः न सिद्ध्यन्ति गृहं विना ।
यतस्तस्मात् गृहारम्भप्रवेशसमयं ब्रुवे' ।।

'परगेहे कृतास्सर्वाः श्रौतस्मार्तक्रियादिकाः ।
निष्फलाः स्युर्यतस्तासां भूमीशः फलमश्नुते' ।।

The *Bhagavata Maha Purana* describes the importance of *Grhastha-Ashrama* (The household stage of life) which is the supporting ground for all other stages of life. 'गृहाश्रमः किं नु करोत्यवद्यम्'. The house is the settlement of a householder who supports all others. At this juncture, a summary of all the details connected with the construction of house is relevent.

**Examination of Earth :**

It is highly necessary to examine the earth during the construction of houses, monastries and temples. The constructions must take place only in earth fit form construction. The examination of earth must be conducted by odour, colour and chemicals. They are 12 kinds of earth namely, *Shaiva, Vaishnava, Braahma, Aindra, Auksha, Bhoutika, Asura, Paishaachika, Raakshasa, Vaayavya, Vaaruna* and *Aagneya*. The first four all fit for house construction.

'निर्माणे पत्तनग्रामक्षेत्रादीनां समन्ततः ।
क्षेत्रमादौ परीक्षेत गन्धवर्णरसप्लवैः' ।।

(सनत्कुमारशास्त्रम्, p.30)

The one which is adorned with *Ashvatha, Kapittha, Ashoka, Padma, Tulasi* or *Garike* (grass) is known as Shaiva Bhumi. The one which is good scented with Bilva,

Palasha, Kusha (Darbhe) and the accessaries of sacrifices is known as *Braahma*. The one which is adorned with animals and birds, free from throns, *Tinduka, Hunase* groves adorned is known as *Vaishnava*. The one which is adorned with Plantain, Jackfruit, Mango and Amalaka is known as Aindra.

कर्णिकारार्जनाश्वत्थकपित्थाशोकधातकी ।
स्थलारविन्दतुलसी दूर्वाभिर्वा तथा मही ।।
विष्णुराक्रान्ताखुकर्णाभ्यां शाल्मली गिरिशारिवा ।
कपोतशुकहंसैश्च शैवी सा शुभदा मही ।।
बिल्वैः पलाशैर्दर्भैश्च कुशैश्च हरिणैस्तथा ।
होमद्रव्यैः सुगन्धैश्च भूर्ब्राह्मी शुभदा मता ।।
तिन्दुकैस्तिन्त्रिणीभिश्च करञ्चैर्वेषुभिस्तथा ।
कार्पासार्कजपाभिश्च हंसैः पक्षिमृगैस्तथा ।।
निकण्टकैस्तथा वृक्षैः या भूमिस्सहिता भवेत् ।
वैष्णवी भूः समाख्याता शौर्यवीर्यप्रदा नृणाम् ।।
कदलीपनसाम्रैश्च पुन्नागैर्वकुलैस्तथा ।
पाटलैस्सिन्धुवारैश्च तथा चामलकैः पुनः ।।
इन्दीवरैश्च वैशैश्च शूद्रैरैन्द्री मही मता ।
पाटल्यगरुगन्धाढ्या धनधान्यसमृद्धिदा ।

(सनत्कुमारशास्त्रम्, p.30)

**Another method for the examination of earth :**

The Muhurta Martanda text describes the qualities of earth thus - The owner must examine the land by filling water in a downward place at about a palm length depth in

the evening time. The next morning, if the water level is intact, it means the earth is well-suited for construction. If the water level is decreased or dry with cracks, it must be known that the land is average and not suited for construction. The pure land must be worshipped with Vastu Purusha and a man-length depth must be dug and a foundation of strong stones must be built.

श्वभ्रं हस्तमितं खनेदिह जलं पूर्णं निशास्ये न्यसेत् ।
प्रातर्दृष्टजलं स्थलं सदजलं मध्यं त्वसत् स्फाटितम् ।।
ज्ञात्वैदं निखनेद् गृहाधिकभुवं नत्वा जलान्तं स्तरो ।
यावद्वा पुरुस्ततः कपिशिरस्तुल्याश्मभिः पूरयेत् ।।
(मुहूर्तमार्ताण्ड, प्र.6, श्लो.4)

It is auspicious to find stones, gold and bricks while digging so is the case of silver and copper articles. If is not advisible to find ants, frogs, snakes, scorpios and other dangerous creatures. Tree dust, bone, ash, skin, egg, snakes and others denote a great calamity or death to the owner. Shell-dice denotes poverty. Cotton, half-burnt sticks denote deseases, Iron and others denote quarrel or death to the owner.

खाते शिलां वा लभते हिरण्यं तथेटिकां चापि समृद्धिरत्र ।
द्रव्यं च रम्याणि सुखानि धत्ते ताम्रादिधातुर्यदि तत्र वृद्धिः ।।
पिपीलिकाः षोडशपक्षनिद्रा भवन्ति चेत्तत्र वसेन्न कर्ता ।
तुषास्थिवीर्याणि तथैव भस्मान्यण्डानि सर्पा मरणप्रदाः स्युः ।।
वराटिका दुःखकलिप्रदात्री कार्पास एवाति ददाति रोगम् ।

काष्ठं प्रदग्धं यदि रोगभीतिर्भवित्कलिः खर्परदर्शनेन ।
लोहेन कर्तुर्मरणं निगद्यं विचार्य वास्तु प्रदिशन्ति धीराः ।।

(वास्तुरत्नावली, p.31)

**The time for House construction :**

*Chaitra* month brings destruction of wealth and fear. *Vaishaakha* is auspicious, *Jyeshtha* and *Aashadha* brings death and cattle-destruction respectively. *Shraavana* brings improvement in hierarchy. *Bhaadrapada* causes disease fear for children. *Aashwija* brings about quarrel. *Kaartika* causes improvement in finance. *Maargashirsha* and *Pushya* brings fear and fire problems respectively. *Maagha* causes improvement in hierarchy. *Phaalguna* causes improvement in finance. Thus the *Sanatkumara Vastu Shastra* describes the effects of months on house construction.

गृहसंस्थापनं चैत्रे धनहानिर्महाभयम् ।
वैशाखे शुभदं विद्यात् ज्येष्ठे तु मरणं ध्रुवम् ।।
आषाढे गोकुलं हन्ति श्रावणे पुत्रवर्धनम् ।
प्रजारोगं भाद्रपदे कलहो अश्वयुजे तथा ।।
कार्तिके धनलाभः स्यात् मार्गशीर्षे महाभयम् ।
पुष्ये चाग्निभयं विद्यात् माघे तु बहुपुत्रवान् ।
फाल्गुने रत्नलाभः स्यात् मासानां च शुभाशुभम् ।।

(सनत्कुमारशास्त्रम्, p.7)

**Auspicious Stars :**

*Mrgashirsha, Hastaa, Revati, Chittaa, Anuraadhaa, Uttaraashaadhaa, Uttaraabhaadraa, Shravanaa, Punarvasu, Shatabhishaa, Dhanishthaa, Ashwini* are auspicious for the construction.

मृगशिरकरपूषात्वष्ट्रमित्रोन्त्तराख्य -
श्रवणदितिजलेशावासवे द्रस्रभे च ।
बहुसुतधनवन्तुस्तम्भसंस्थापनं स्यात्
इति भवति मुनीन्द्रो मानवानां गृहाणाम् ।।

(सनत्कुमारशास्त्रम्, p.24)

नासत्याादितिरेवतीकरगुरुश्रोणत्रयेन्दूत्तरा ।
मित्रत्वष्टृविधातृभेषु सुतदास्तम्भप्रतिष्ठार्थदा ।।

(कालागमः , p.93)

रोहिणी चोत्तरास्तिस्रो हस्तं स्वाती पुनर्वसू ।
अनुराधाश्वयुक् सौम्यं वैष्णवं वारुणं मघा ।
चित्ताश्रविष्ठौपौष्णाश्च मनुजेषु प्रशंसिताः ।।

(काभिकागमः, p.70)

**Auspicious Days :**

Fire problems will be created if the construction takes place on Sunday, Monday on the bright half of the month causes improvement and the dark-half Monday causes quarrel and destruction. If the pillar is erected on Tuesday which has *Kujaamsha* and *Kujalagna*, it brings about house destruction and death to the owner.

Wednesday causes improvement in finance. Thursday brings financial stability. Friday causes much happiness. Saturday brings fear of thieves. So a day must be chosen according to Vastu science.

The opinion of *Muhurta Chintaamani* is - The commencement of construction on Thursday with a combination of Guru along with *Pushyaa Mrgashiraa, Shravanaa, Aashleshaa* and *Poorvashaadhaa* stars brings improvement in hierarchy and finance to the owner. Similarly *Shukra* alongwith *Vishakhaa, Ashwini, Chittaa, Dhanishthaa, Shatabhishaa* and *Ardraa* stars brings fear or fire for the owner and bad for children. Similarly Wednesday with a combination of *Budha* along with *Rohini, Ashwini, Uttaraaphalguni, Chittaa* and *Hastaa* stars brings happiness and improvement of lineage. Saturday with a combination of *Shani* along with *Poorvaabhaadraa, Uttaraabhaadraa, Jyeshthaa, Anuraadhaa, Swaati* and *Bharani* stars brings problems.

पुष्यध्रुवेन्दुहरिसर्पजालैः सजीवैस्त -
द्वासरेण च कृतं सुतराज्यदं स्यात् ।
द्वीशाश्वितक्षसुपाशिशिवैः सशुक्रैर्वरि
सितस्य च गृहं धनधान्यदं स्यात् ।।
सारैः करेज्यान्त्यमघाम्बुमूलैः
कौजेऽह्नि वेश्माग्निसुतार्तिदं स्यात् ।
सज्ञैः कदस्रार्यमतक्षहस्तैर्ज्ञस्यैव वारे सुखपुत्रदं स्यात् ।।

अज्ञैकपादहिर्बुध्न्यशक्रमित्रानिलान्तकैः ।
समन्दैर्मन्दवारे स्याद्रक्षोभूतयुतं गृहम् ।।
(मुहूर्तचिन्तामणिः, 12/26-28)

**The method of house construction :**

After the examination of earth, about 6 feet depth must be dug. The land must be purified and strong stones must be laid as foundation. Bathroom must be in East and kitchen must be in South-East. Bedroom must be in Sourh. Store must be in South-West. Dining hall must be in West and Cattle-room in North-West, wealth-room must be in North and Pooja-room must be in North-East.

स्नानाग्निपाकशयनास्त्रभुजेश्च धान्य-
भाण्डारदैवतगृहाणि च पूर्वतः स्युः ।
तन्मध्यतस्तु मथनाज्यपुरीषविद्या-
भ्यासाख्यरोदनरतौघधसर्वधाम ।।
(मुहूर्तचिन्तामणिः, 12-21)

This can be seen in Sanatkumara Vastu text.

स्नानागारं दिशि प्राच्याम् आग्नेय्यां पचनालयम् ।
दक्षिणे शयनागारं नैऋत्यां शस्त्रमन्दिरम् ।।
पश्चिमे भोजनागारं वायव्ये पशुमन्दिरम् ।
भण्डारं चोत्तरस्यां तु ईशान्यां देवमन्दिरम् ।।
(सनत्कुमारशास्त्रम्, p.69)

**The method of identify well or water resources :**

Well in hte middle of Vastu land brings destruction of wealth. North-Eastbrings improvement, East causes son's death, and South causes death of women. West brings prosperity and North-West causes hindarance by enemies. North brings comfortable life. Therefore, well must be constructed in North-East, West or North only. It has been described by Varaha Mihira thus :

आग्नेये यदि कोणे ग्रामस्य गृहस्य वा भवति कूपः ।
नित्यं करोति दाहं जलमपि तत्रैव चञ्चलप्रायम् ।।
नैऋत्यकोणे बालक्षयं च वनिताक्षयं वायव्ये ।
दिक्त्रयमेतत् त्यक्त्वा शेषास्तु शुभावहाः ।। इति ।।

(बृहत्संहिता, p.54.978)

Well or water resources are strictly prohibited in three places of the sight.



Thus, we can see priceless knowledge about house construction in Vastu texts. The construction of house in the prescribed format brings about peace and comfort in life. **(See the house construction picture No. 11, Appendix 1)**

  

# ಸನತ್ಕುಮಾರ ಗೃಹವಾಸ್ತುಸಾರ

ತಂತ್ರಸಾರಸಂಗ್ರಹದಲ್ಲಿ ಸಾರ್ವಕಾಲಿಕೋಪಯೋಗಿಯಾದ ದೇವಸ್ಥಾನದ ವಾಸ್ತು ಹಾಗೂ ಪ್ರತಿಮಾ ಶಾಸ್ತ್ರದ ಬಗ್ಗೆ ಅಪೂರ್ವ ಮಾಹಿತಿಯನ್ನು ನೀಡ-ಲಾಗಿದೆ. ಇದರ ವ್ಯಾಖ್ಯಾನ ಹಾಗೂ ಬೇರೆ ವಾಸ್ತುಶಾಸ್ತ್ರಗ್ರಂಥಗಳಲ್ಲಿ ಬಂದ ಮತ್ತು ಸನತ್ಕುಮಾರವಾಸ್ತುಶಾಸ್ತ್ರವನ್ನು ಆಧರಿಸಿ ಗೃಹವಾಸ್ತುವಿಗೆ ಸಂಬಂಧಿಸಿದ ಉಪಯುಕ್ತ ವಿಷಯವನ್ನು ಓದುಗರ ಸೌಕರ್ಯಕ್ಕಾಗಿ ಮುಂದೆ ನಿರೂ-ಪಿಸಲಾಗುವುದು. ಇದರೊಡನೆ ನಾಲ್ಕು ದಿಕ್ಕುಗಳಲ್ಲಿ ಮನೆ ಕಟ್ಟಬೇಕಾದ ಪದ್ಧತಿಯ ಚಿತ್ರವನ್ನು ನೀಡಲಾಗಿದೆ.

## ವಾಸ್ತುವಿಜ್ಞಾನ

ಸಾವಿರ ಸಾವಿರವರ್ಷಗಳ ಹಿಂದೆ ಕಟ್ಟಿದ ದೇಗುಲಗಳು ರಾಜಮಂದಿರಗಳು ಇಂದಿಗೂ ನಾಶವಾಗದೆಯೇ ಕಂಗೊಳಿಸುತ್ತಿರುವುದು ನಮ್ಮೆಲ್ಲರ ಅನುಭವ-ಸಿದ್ಧವಾದ ಸಂಗತಿ. ಈ ಕಟ್ಟಡಗಳ ಭವ್ಯತೆ, ಇದರೊಳಗಿರುವ ಚಿತ್ರಗಳು, ಆಂತರಂಗಿಕ ಸೌಂದರ್ಯಗಳು ಭೂಕಂಪ ಮುಂತಾದ ದೈವೀ ಪ್ರಕೋಪಗಳು ಒದಗಿದಾಗಲೂ ವಿನಾಶಗೊಳ್ಳದಿರುವಿಕೆಗಳ ಹಿಂದೆ ಒಂದು ವಿಜ್ಞಾನವು ಜೀವಂತವಾಗಿತ್ತೆಂದು ನಂಬುವುದು ಅನಿವಾರ್ಯವಿದೆ. ಆ ವಿಜ್ಞಾನವನ್ನು ಪ್ರಾಚೀನರು ವಾಸ್ತುವಿಜ್ಞಾನವೆಂದು ಕರೆದಿದ್ದಾರೆ. ಇಂದು ಆಳವಾಗಿ ವಾಸ್ತು-ಶಾಸ್ತ್ರವನ್ನು ಅಭ್ಯಾಸ ಮಾಡಿದ ಮೂಲಗ್ರಂಥಗಳನ್ನು ಶೋಧಿಸಿದ ಕರಾರು-ವಾಕ್ಕಾದ ಮಾಹಿತಿ ನೀಡುವ ಗ್ರಂಥಗಳಾಗಲಿ ವಿದ್ವಾಂಸರ ಪರಂಪರೆಯಾಗಲಿ ಪ್ರಾಯಃ ದೊರಕುತ್ತಿಲ್ಲ. ಇಂದು ದೊರಕುವ ಸಾಹಿತ್ಯ ಮತ್ತು ವಾಸ್ತುಶಾಸ್ತ್ರದ ಸಲಹೆ ಸೂಚನೆಗಳು ಪ್ರಾಚೀನ ವಾಸ್ತುಶಾಸ್ತ್ರದ ಪಳಿಯುಳಿಕೆ ಮಾತ್ರ. ಈ ಹಿನ್ನೆಲೆಯಲ್ಲಿ ಪ್ರಾಚೀನ ವಾಸ್ತುಶಾಸ್ತ್ರಗ್ರಂಥಗಳ ಆಧಾರದಿಂದ ಪರಿಶುದ್ಧವಾದ ತರ್ಕಬದ್ಧವಾದ ವಿಚಾರಪದ್ಧತಿಯನ್ನು ಶೋಧಿಸುವ ಅನಿವಾರ್ಯತೆ ಇದೆ. ಅಂತಹ ಒಂದು ಕಿರು ಪ್ರಯತ್ನ ಈಗ ನಡೆಸಲಾಗಿದೆ.

## ಮನೆಯನ್ನು ಕಟ್ಟಲು ಪ್ರಶಸ್ತವಾದ ಮಾಸಗಳು

ಚೈತ್ರಮಾಸದಲ್ಲಿ ಗೃಹನಿರ್ಮಾಣ ಮಾಡಿದರೆ ಹೆಚ್ಚು ದ್ರವ್ಯವು ಪೋಲಾಗುವುದು. ವೈಶಾಖಮಾಸವು ಶುಭಕಾರಕ. ಜ್ಯೇಷ್ಠ ಆಷಾಢಗಳು ಹಾನಿಕಾರಕ. ಶ್ರಾವಣಮಾಸವು ಸಂತತಿವೃದ್ಧಿಗೆ ಕಾರಣವಾಗಿದೆ. ಭಾದ್ರಪದ ಮಾಸದಲ್ಲಿ ಗೃಹಾರಂಭವು ರೋಗಭೀತಿಗೆ ಕಾರಣವು. ಆಶ್ವಯುಜ ಮಾಸದಲ್ಲಿ ಆಂತರಿಕ ಕಲಹಕ್ಕೆ ಕಾರಣ. ಮಾರ್ಗಶೀರ್ಷ ಪುಷ್ಯಗಳು ಭಯ ಮತ್ತು ದುಃಖ ಕಾರಣಗಳು. ಮಾಘ ಮತ್ತು ಫಾಲ್ಗುಣಗಳು ಸಮೃದ್ಧಿ ಕಾರಣವಾಗಿವೆ. ಇದರೊಡನೆ ಉತ್ತರಾಯಣಕಾಲದಲ್ಲಿ ಮನೆ ಕಟ್ಟುವ ಕಾರ್ಯವು ಅತ್ಯಂತ ಪ್ರಶಸ್ತವೆಂದು ಪ್ರಾಚೀನರ ಅಭಿಪ್ರಾಯವಾಗಿದೆ -

ಗೃಹಸಂಸ್ಥಾಪನಂ ಚೈತ್ರೇ ಧನಹಾನಿರ್ಮಹಾಭಯಮ್ |<br>
ವೈಶಾಖೇ ಶುಭದಂ ವಿದ್ಯಾತ್ ಜ್ಯೇಷ್ಠೇ ತು ಮರಣಂ ಧ್ರುವಮ್ ||<br>
ಆಷಾಢೇ ಗೋಕುಲಂ ಹಂತಿ ಶ್ರಾವಣೇ ಪುತ್ರವರ್ಧನಮ್ |<br>
ಪ್ರಜಾರೋಗಂ ಭಾದ್ರಪದೇ ಕಲಹೋ ಅಶ್ವಯುಜೇ ತಥಾ ||<br>
ಕಾರ್ತಿಕೇ ಧನಲಾಭಃ ಸ್ಯಾತ್ ಮಾರ್ಗಶೀರ್ಷೇ ಮಹಾಭಯಮ್ |<br>
ಪುಷ್ಯೇ ಚಾಗ್ನಿಭಯಂ ವಿದ್ಯಾತ್ ಮಾಘೇ ತು ಬಹುಪುತ್ರವಾನ್ |<br>
ಫಾಲ್ಗುನೇ ರತ್ನಲಾಭಃ ಸ್ಯಾತ್ ಮಾಸಾನಾಂ ಚ ಶುಭಾಶುಭಮ್ ||

- ಸನತ್ಕುಮಾರವಾಸ್ತುಶಾಸ್ತ್ರಮ್

## ಮನೆಯನ್ನು ನಿರ್ಮಿಸಲು ಯೋಗ್ಯವಾದ ವಾರದ ವಿವರ

ಭಾನುವಾರದಂದು ಮನೆಯನ್ನು ಆರಂಭಿಸಿದರೆ ಬೆಂಕಿಯಿಂದ ಸುಡುವುದು. ಶುಕ್ಲಪಕ್ಷದ ಸೋಮವಾರದಂದು ವೃದ್ಧಿಯು. ಕೃಷ್ಣಪಕ್ಷ ಸೋಮವಾರದಂದು ಕಲಹ ಮತ್ತು ನಾಶ. ಮಂಗಳವಾರದಂದು ಮನೆಯ ದಾಹ ಮತ್ತು ಯಜಮಾನನಿಗೆ ಅಪಾಯ. ಬುಧ, ಗುರು ಮತ್ತು ಶುಕ್ರವಾರಗಳಲ್ಲಿ ಸರ್ವಾರ್ಥಸಿದ್ಧಿ. ಶನಿವಾರದಂದು ಕಳ್ಳರ ಭಯ. ಆದ್ದರಿಂದ ಸೋಮ, ಬುಧ, ಗುರು ಮತ್ತು ಶುಕ್ರವಾರಗಳಲ್ಲಿ ಮಾತ್ರವೇ ಗೃಹಾರಂಭ ಮಾಡಬೇಕು -

ಭಾನುವಾರೇ ಕೃತಂ ವೇಶ್ಮ ವಹ್ನಿನಾ ದಹ್ಯತೇ ಚಿರಾತ್ |
ಚಾಂದ್ರೇ ಚ ವರ್ಧತೇ ಶುಕ್ಲೇ ಕ್ಷೀಯತೇ ಕೃಷ್ಣಪಕ್ಷಕೇ ||
ಭೌಮವಾಸರೇ ತದಂಶೇ ವಾ ತಲ್ಲಗ್ನೇ ಸಪ್ತಮೇಪಿ ವಾ |
ದಹ್ಯತೇ (ತದ್‌ಗೃಹಂ) ಶೂನ್ಯಂ ಕರ್ತುರ್ಮರಣಮೇವ ಚ ||
ಬುಧವಾರೇ ಧನೈಶ್ವರ್ಯಂ ಸುಖಪುತ್ರಸಮನ್ವಿತಮ್ |
ಭೃತ್ಯವಾಹನಧಾನ್ಯಾನಿ ಧನಾನ್ಯಾಂಗಿರಸೇ ದಿನೇ ||
ಭೃಗುವಾರೇ ಚಿರಂ ತಿಷ್ಠೇತ್ ಕರ್ತಾ ಚ ಸುಖಸಂಪದಾ |
ಚಿರಂ ತಿಷ್ಠೇತ್‌ಮಂದವಾರೇ ತಸ್ಕರಾಣಾಂ ಭಯಾವಹಃ ||

- ಸನತ್ಕುಮಾರವಾಸ್ತುಶಾಸ್ತ್ರಮ್

## ಗೃಹಾರಂಭಯೋಗ್ಯ ನಕ್ಷತ್ರಗಳು

ಮೃಗಶೀರ್ಷ, ಹಸ್ತ, ರೇವತಿ, ಚಿತ್ತ, ಅನುರಾಧಾ, ಉತ್ತರಾಷಾಢ, ಉತ್ತರಾಭಾದ್ರಾ, ಶ್ರವಣ, ಪುನರ್ವಸು, ಶತಭಿಷಾ, ಅಶ್ವಿನೀ ನಕ್ಷತ್ರಗಳು ಶುಭದಾಯಕವಾಗಿವೆ.

ಮೃಗಶಿರಕರಪೂಷಾತ್ವಷ್ಟ್ರಮಿತ್ರೋಂತರಾಖ್ಯ
ಶ್ರವಣದಿತಿಜಲೇಶಾವಾಸವೇ ದ್ರುಸ್ರಭೇ ಚ |
ಬಹುಸುತಧನವಂತುಸ್ತಂಭಸಂಸ್ಥಾಪನಂ ಸ್ಯಾತ್
ಇತಿ ಭವತಿ ಮುನೀಂದ್ರೋ ಮಾನವಾನಾಂ ಗೃಹಾಣಾಮ್ ||

- ಸನತ್ಕುಮಾರವಾಸ್ತುಶಾಸ್ತ್ರಮ್

ಪುಷ್ಯ ಮತ್ತು ರೋಹಿಣಿಗಳು ಗೃಹಾರಂಭಕ್ಕೆ ಪ್ರಶಸ್ತವೆಂದು ಕಾಲಾಮೃತ ಗ್ರಂಥದ ಅಭಿಪ್ರಾಯವಾಗಿದೆ -

ನಾಸತ್ಯಾದಿತಿರೇವತೀಕರಗುರುಶ್ರೋಣತ್ರಯೇಂದುತ್ತರಾ |
ಮಿತ್ರತ್ವಷ್ಟ್ರವಿಧಾತೃಭೇಷು ಸುತದಾಸ್ತಮ್ಭಪ್ರತಿಷ್ಠಾರ್ಥದಾ ||

- ಕಾಲಾಮೃತ

ಈ ಪ್ರಮೇಯವು ಕಾಮಿಕಾಗಮದಲ್ಲೂ ಕೂಡ ನಿರೂಪಿತವಾಗಿದೆ. ರೋಹಿಣೀ, ಉತ್ತರೆಯಿಂದ ಆರಂಭಿಸುವ ಮೂರು ನಕ್ಷತ್ರಗಳು, ಹಸ್ತ, ಸ್ವಾತೀ, ಪುನ-

ರ್ವಸೂ, ಅನುರಾಧಾ, ಅಶ್ವಿನೀ, ಶ್ರವಣ ಮೊದಲಾದ ನಕ್ಷತ್ರಗಳು ಗೃಹ-ನಿರ್ಮಾಣಕ್ಕೆ ಪ್ರಶಸ್ತವಾಗಿವೆ -

ರೋಹಿಣೀ ಚೋತ್ತರಾಸ್ತಿಸ್ರೋ ಹಸ್ತಂ ಸ್ವಾತೀ ಪುನರ್ವಸೂ |
ಅನುರಾಧಾಶ್ವಯುಕ್ ಸೌಮ್ಯಂ ವೈಷ್ಣವಂ ವಾರುಣಂ ಮಘಾ |
ಚಿತ್ರಾ ಶ್ರವಿಷ್ಠೌ ಪೌಷ್ಣಾಶ್ಚ ಮನುಜೇಷು ಪ್ರಶಂಸಿತಾಃ ||

- ಕಾಮಿಕಾಗಮ

### ಭೂಶೋಧನೆ

ಮನೆ ಅಥವಾ ದೇವಮಂದಿರಗಳ ನಿರ್ಮಾಣ ಪ್ರಸಂಗದಲ್ಲಿ ಭೂಮಿಯನ್ನು ಶೋಧಿಸುವುದು ಅತ್ಯಂತ ಆವಶ್ಯಕವಾಗಿದೆ. ಗಂಧ, ಬಣ್ಣ, ರಸ, ಹರಿವು, ಈ ಮಾಧ್ಯಮಗಳ ಮೂಲಕ ಭೂಮಿಯನ್ನು ಪರೀಕ್ಷಿಸಬೇಕು.

ನಿರ್ಮಾಣೇ ಪತ್ತನಗ್ರಾಮಕ್ಷೇತ್ರಾದೀನಾಂ ಸಮಂತತಃ |
ಕ್ಷೇತ್ರಮಾದೌ ಪರೀಕ್ಷೇತ ಗಂಧವರ್ಣರಸಪ್ಲವೈಃ ||

- ಸನತ್ಕುಮಾರವಾಸ್ತುಶಾಸ್ತ್ರಮ್

### ಭೂಮಿಯು ೧೨ ಬಗೆಯಾಗಿದೆ

ಶೈವ, ವೈಷ್ಣವ, ಬ್ರಾಹ್ಮ, ಐಂದ್ರ, ಔಕ್ಷ, ಭೌತಿಕ, ಅಸುರ, ಪೈಶಾಚಕ, ರಾಕ್ಷಸ, ವಾಯವ್ಯ, ವಾರುಣ, ಆಗ್ನೇಯ ಎಂಬುದಾಗಿ ಭೂಮಿಯು ಹನ್ನೆರಡು ಬಗೆಯಾಗಿದೆ. ಯಾವ ಪ್ರದೇಶದಲ್ಲಿ ಅಶ್ವತ್ಥ, ಕಪಿತ್ಥ, ಅಶೋಕ, ಕಮಲ, ತುಳಸಿ, ಗರಿಕೆ ಹುಲ್ಲುಗಳು ಅನಾಯಾಸಾಗಿ ಬೆಳದಿರುವವವೋ ಆ ಭೂಮಿಯು ಶೈವ ಎನಿಸಿದೆ. ಬಿಲ್ವ, ಪಲಾಶ, ದರ್ಭೆ, ಮತ್ತು ಸುಗಂಧವುಳ್ಳ ಭೂಮಿಯು ಬ್ರಾಹ್ಮವೆನಿಸಿದೆ. ಹುಣಸೇ ಮರ ಅಥವಾ ಹಣ್ಣಿನ ಮರಗಳಿಂದ ಕೂಡಿದ ಮುಳ್ಳಿಲ್ಲದ ಭೂಮಿಯು ವೈಷ್ಣವ ಎನಿಸಿದೆ. ಬಾಳೆ, ಹಲಸು, ಮಾವು, ನೆಲ್ಲಿ, ಮೊದಲಾದ ಗಿಡಗಳಿಂದ ಕೂಡಿದ ಭೂಮಿಯು ಐಂದ್ರ ಎನಿಸಿದೆ. ಈ ೪ ಲಕ್ಷಣಗಳಿಂದ ಕೂಡಿದ ಭೂಮಿಯು ಗೃಹಾರಂಭಕ್ಕೆ ಪ್ರಶಸ್ತವಾಗಿದೆ.

ಕರ್ಣಿಕಾರಾರ್ಜುನಾಶ್ವತ್ಥಕಪಿತ್ಥಾಶೋಕಧಾತಕೀ |
ಸ್ಥಲಾರವಿಂದತುಲಸೀ ದೂರ್ವಾಭಿರ್ವಾ ತತಾ ಮಹೀ ||

ವಿಷ್ಣುಕ್ರಾನ್ತಾಖಕರ್ಣಾಭ್ಯಾಂ ಶಾಲ್ಮಲೀ ಗಿರಿಶಾರಿಬಾ |
ಕಪೋತಶುಕಹಂಸೈಶ್ಚ ಶೈವೀ ಸಾ ಶುಭದಾ ಮಹೀ ||
ಬಿಲ್ವೈಃ ಪಲಾಶೈರ್ದರ್ಭೈಶ್ಚ ಕುಶೈಶ್ಚ ಹರಿಣೈಸ್ತಥಾ |
ಹೋಮದ್ರವ್ಯೈಃ ಸುಗಂಧೈಶ್ಚ ಭೂರ್ಬ್ರಾಹ್ಮೀ ಶುಭದಾ ಮತಾ ||
ತಿಂದುಕೈಸ್ತಿಂತ್ರಿಣೀಭಿಶ್ಚ ಕರಂಜೈರ್ವೇಣುಭಿಸ್ತಥಾ |
ಕಾರ್ಪಾಸಾರ್ಕಜಪಾಭಿಶ್ಚ ಹಂಸೈಃ ಪಕ್ಷಿಮೃಗೈಸ್ತಥಾ ||
ನಿಷ್ಕಂಟಕೈಸ್ತಥಾ ವೃಕ್ಷೈಃ ಯಾ ಭೂಮಿಸ್ಸಹಿತಾ ಭವೇತ್ |
ವೈಷ್ಣವೀ ಭೂಃ ಸಮಾಖ್ಯಾತಾ ಶೌರ್ಯವೀರ್ಯಪ್ರದಾಃ ನೃಣಾಮ್ |
ಕದಲೀಪನಸಾಮ್ರೈಶ್ಚ ಪುನ್ನಾಗೈರ್ಬಕುಲೈಸ್ತಥಾ ||
ಪಾಟಲೈಸ್ಸಿಂಧುವಾರೈಶ್ಚ ತಥಾ ಚಾಮಲಕೈಃ ಪುನಃ |
ಇಂದೀವರೈಶ್ಚ ವೈಶ್ಯೈಶ್ಚ ಶೂದ್ರೈರ್ಯೆಂದ್ರೀ ಮಹೀ ಮತಾ |
ಪಾಟಲಾಗರುಗಂಧಾಢ್ಯಾ ಧನಧಾನ್ಯಸಮೃದ್ಧಿದಾ ||

- ಸನತ್ಕುಮಾರವಾಸ್ತುಶಾಸ್ತ್ರಮ್

### ವಾಸ್ತುಪುರುಷಪೂಜೆ

ಶೈವ, ವೈಷ್ಣವ, ತಂತ್ರ ಮತ್ತು ಆಗಮ ಗ್ರಂಥಗಳಲ್ಲಿ ವಾಸ್ತುಪುರುಷನ ಕಥೆಯು ವಿಭಿನ್ನವಾಗಿ ಕೇಳಿಬರುತ್ತದೆ. ವೈಷ್ಣವತಂತ್ರಗಳ ಪ್ರಕಾರ ವಾಸ್ತು-ಪುರುಷನು ವರಾಹರೂಪಿಯಾದ ಹರಿಯ ಮಗನು. ಚತುಷ್ಕೋಣಾಕಾರವಾಗಿ ಭೂಮಿಯ ಮೇಲೆ ಬಿದ್ದಿರುವನು. ಅವನ ಮೇಲೆ ಬ್ರಹ್ಮಾದಿ ದೇವತೆಗಳು ಸನ್ನಿಹಿತರಾಗಿರುವರು. ಅವರನ್ನು ಪೂಜಿಸಿ, ಗೃಹಾರಂಭವನ್ನು ಮಾಡಬೇಕು. ಮನೆಯನ್ನು ಸಂಪೂರ್ಣವಾಗಿ ಕಟ್ಟಿ ಮುಗಿದ ಮೇಲೆ ಮತ್ತೊಮ್ಮೆ ವಾಸ್ತುಪುರುಷ ಪೂಜೆಯನ್ನು ಮಾಡಬೇಕು.

ಪೂಜಯೇದ್ ವಾಸ್ತುಪುರುಷಸ್ಯೋಪರಿಸ್ಥಾಂಸ್ತು ಸರ್ವದಾ |
ದೇವಾನ್ ಬ್ರಹ್ಮಾದಿಕಾನ್ ವಾಸ್ತುರ್ವರಾಹಸ್ಯ ಹರೇಃ ಸುತಃ |
ಪಾತಿತೋ ದೇವತೈರ್ಭೂಮೌ ಚತುರಸ್ರಾಕೃತಿಃ ಸ್ಥಿತಃ ||

- ತಂತ್ರಸಾರಸಂಗ್ರಹ

ಶೈವಗ್ರಂಥಗಳಲ್ಲಿ ಕಥೆ ಹೀಗಿದೆ. ಅಂಧಕಾಸುರನ ಸಂಹಾರ ಮಾಡುವಾಗ ಕೋಪಗೊಂಡ ಶಂಕರನ ದೇಹದಿಂದ ಒಂದು ಹನಿ ಬೆವರು ಬಿದ್ದಿತು. ಆ ಬೆವರೇ ಬೃಹದಾಕಾರವಾಗಿ ಮೂರು ಲೋಕಗಳನ್ನೂ ವ್ಯಾಪಿಸಿ ವಾಸ್ತುಪುರುಷನ ರೂಪವನ್ನು ತಾಳಿತು. ದೇವತೆಗಳು, ವಾಸ್ತುಪುರುಷನಿಗೆ ಹೀಗೆ ವರವಿತ್ತರು - ಮನೆ ಮಂದಿರಗಳ ನಿರ್ಮಾಣ ಕಾಲದಲ್ಲಿ ನಿನಗೆ ಪೂಜೆ ಸಲ್ಲಲಿ.

ಸಂಗ್ರಾಮೇಽಂಧಕರುದ್ರಯೋಶ್ಚ ಪತಿತಃ ಸ್ವೇದೋ ಮಹೇಶಾತ್ ಕ್ಷಿತೌ
ತಸ್ಮಾದ್ ಭೂತಮಭೂಚ್ಚ ಭೀತಿಜನನಂ ದ್ಯಾವಾಪೃಥಿವ್ಯೋರ್ಮಹತ್ |
ತದ್ದೇವೈಃ ಸಹಸಾ ನಿಗೃಹ್ಯ ಭೂಮಾವಧೋವಕ್ತ್ರಕಂ
ದೇವಾನಾಂ ವಚನಾಚ್ಚ ವಾಸ್ತುಪುರುಷಸ್ತೇನೈವ ಪೂಜ್ಯೋ ಬುಧೈಃ ||
- ವಾಸ್ತುರಹಸ್ಯ

### ನೀರಿನ ಸೆಲೆ ಗುರುತಿಸುವಿಕೆ ಅಥವಾ ಬಾವಿ ಮೊದಲಾದವುಗಳನ್ನು ತೋಡಿಸುವುದು

ಬಾವಿ ಮುಂತಾದ ನೀರಿನ ಸೆಲೆಗಳ ನಿರ್ಮಾಣವು ಉತ್ತರ, ಪೂರ್ವ, ಪಶ್ಚಿಮ ದಿಕ್ಕುಗಳಲ್ಲಿ ಪ್ರಶಸ್ತವಾಗಿದೆ. ಬಾಗಿಲಿಲ್ಲದ ಜಲಾಶಯವನ್ನು 'ಕೂಪ' ಎನ್ನುತ್ತಾರೆ. ಒಂದು ಬಾಗಿಲಿರುವ ಸುತ್ತ ಕಟ್ಟೆ ಕಟ್ಟಿದ ಜಲಾಶಯವನ್ನು 'ವಾಪಿ' ಎನ್ನುತ್ತಾರೆ. ಅನೇಕ ಬಾಗಿಲುಗಳಿಂದ ಕೂಡಿದ ಅಪಾರ ಜಲರಾಶಿಯ ಆಕರವನ್ನು 'ಪುಷ್ಕರಿಣೀ' ಎನ್ನುತ್ತಾರೆ.

ದ್ವಾರಹೀನೋ ಭವೇತ್ಕೂಪಃ ದ್ವಾರೇಣೈಕೈನ ವಾಪಿಕಾ |
ನೈಕದ್ವಾರಾ ಪುಷ್ಕರಿಣೀ ದೀರ್ಘಾಕಾರಾ ತು ದೀರ್ಘಿಕಾ |
ಕುಲ್ಯಾ ವಿಧೂತತೋಯಾಶ್ಚ ತಟಾಕಾಃ ಪರಿಕೀರ್ತಿತಾಃ ||

### ಇಲ್ಲಿ ಜಲಾಶಯವನ್ನು ನಿರ್ಮಿಸಕೂಡದು

ಆಗ್ನೇಯ, ನೈಋತ್ಯ, ವಾಯವ್ಯ ದಿಕ್ಕಿನಲ್ಲಿ ಜಲಾಶಯವನ್ನು ನಿರ್ಮಾಣ ಮಾಡಕೂಡದು. ಈ ವಿಷಯವು ವರಾಹಮಿಹಿರನಿಂದ ನಿರೂಪಿಸಲ್ಪಟ್ಟಿದೆ -

ಆಗ್ನೇಯೇ ಯದಿ ಕೋಣೇ ಗ್ರಾಮಸ್ಯ ಗೃಹಸ್ಯ ವಾ ಭವತಿ ಕೂಪಃ |
ನಿತ್ಯಂ ಕರೋತಿ ದಾಹಂ ಜಲಮಪಿ ತತ್ರೈವ ಚಂಚಲಪ್ರಾಯಮ್ ||

ನೈರ್ಋತೇ ಕೋಣೇ ಬಾಲಕ್ಷಯಂ ಚ ವನಿತಾಕ್ಷಯಂ ವಾಯವ್ಯೇ |
ದಿಕ್ತ್ರಯಮೇತತ್ತ್ಯಕ್ತ್ವಾ ಶೇಷಾಸ್ತು ಶುಭಾವಹಾಃ ಪ್ರೋಕ್ತಾಃ ||
- ಬೃಹತ್ಸಂಹಿತಾ

ಅಡಿಗೆಯ ಮನೆ, ಸ್ನಾನದ ಕೋಣೆ, ಭೋಜನಶಾಲೆ
ಮುಂತಾದವುಗಳನ್ನು ಕಟ್ಟಬೇಕಾದ ಸ್ಥಳ ವಿವರ

ಪೂರ್ವದಿಕ್ಕಿನಲ್ಲಿ ಸ್ನಾನದ ಮನೆಯನ್ನು, ಅದರ ಪಕ್ಕದಲ್ಲಿ ಪದಾರ್ಥಗಳಿಡುವ ಕೋಣೆಯನ್ನು, ಆಗ್ನೇಯ ದಿಕ್ಕಿನಲ್ಲಿ ಅಡಿಗೆ ಶಾಲೆಯನ್ನು, ಅದರ ಪಕ್ಕದಲ್ಲಿ ಹಾಲು, ಮೊಸರು ಮೊದಲಾದ ಪದಾರ್ಥಗಳಿಡುವ ಕೋಣೆಯನ್ನು, ದಕ್ಷಿಣ ದಿಕ್ಕಿನಲ್ಲಿ ಮಲಗುವ ಕೋಣೆಯನ್ನು, ಅದರ ಪಕ್ಕದಲ್ಲಿ ಶೌಚಾಲಯವನ್ನು, ನೈಋತ್ಯ ದಿಕ್ಕಿನಲ್ಲಿ ಪದಾರ್ಥಗಳನ್ನು ಇಡುವ ಕೋಣೆಯನ್ನು, ಅದರ ಪಕ್ಕದಲ್ಲಿ ವಿದ್ಯಾಭ್ಯಾಸದ ಕೋಣೆಯನ್ನು, ಪಶ್ಚಿಮ ದಿಕ್ಕಿನಲ್ಲಿ ಭೋಜನಶಾಲೆಯನ್ನು, ವಾಯವ್ಯದಿಕ್ಕಿನಲ್ಲಿ ಮತ್ತೊಂದು ಕೋಣೆಯನ್ನು, ಅದರ ಪಕ್ಕದಲ್ಲಿ ಮಲಗುವ ಕೋಣೆಯನ್ನು, ಅದರ ಮುಂದೆ ಉತ್ತರ ದಿಕ್ಕಿನಲ್ಲಿ ಅಮೂಲ್ಯ ಪದಾರ್ಥಗಳ ಸಂಗ್ರಹ ಕೋಣೆಯನ್ನು, ಈಶಾನ್ಯದಿಕ್ಕಿನಲ್ಲಿ ದೇವರ ಕೋಣೆಯನ್ನು, ಅದರ ಪಕ್ಕದಲ್ಲಿ ಪುಟ್ಟದಾದ ಹೊರಗಿನಿಂದ ಆಗಮಿಸಿದ ವ್ಯಕ್ತಿಗಳನ್ನು ಸ್ವಾಗತಿಸಿ ಕುಳ್ಳರಿಸುವ ಕೋಣೆಯೊಂದನ್ನು ನಿರ್ಮಿಸಬೇಕು.

ಸ್ನಾನಾಗಾರಂ ದಿಶಿ ಪ್ರಾಚ್ಯಾಮ್ ಆಗ್ನೇಯ್ಯಾಂ ಪಚನಾಲಯಮ್ |
ದಕ್ಷಿಣೇ ಶಯನಾಗಾರಂ ನೈರ್ಋತ್ಯಾಂ ಶಾಸ್ತ್ರಮಂದಿರಮ್ ||
ಪಶ್ಚಿಮೇ ಭೋಜನಾಗಾರಂ ವಾಯವ್ಯೇ ಪಶುಮಂದಿರಮ್ |
ಭಂಡಾರಂ ಚೋತ್ತರಸ್ಯಾಂ ತು ಈಶಾನ್ಯಾಂ ದೇವಮಂದಿರಮ್ |
- ಸನತ್ಕುಮಾರವಾಸ್ತುಶಾಸ್ತ್ರಮ್

ಸ್ನಾನಸ್ಯ ಪಾಕಶಯನಾಸ್ತ್ರಭುಜೇಶ್ಚ
ಧಾನ್ಯಭಾಂಡಾರದೈವತಗೃಹಾಣಿ ಚ ಪೂರ್ವತಃ ಸ್ಯುಃ |
ತನ್ಮಧ್ಯತೋಥ ಮಥನಾಜ್ಯಪುರೀಷ
ವಿದ್ಯಾಭ್ಯಾಸಾಖ್ಯರೋದನರತೌಷಧಸರ್ವಧಾಮ ||
- ಮುಹೂರ್ತಚಿಂತಾಮಣಿ

ಸ್ನಾನಾಗ್ನಿಸ್ವಪಿವಸ್ತ್ರಭೋಜನಪಶುದ್ರವ್ಯಾಮರೌಕಸ್ಥಿತಿಂ
ಪೂರ್ವಾದೌ ಜಲಮೀಶಿತುರ್ದಿಶಿ ಪರಂ ವಾಯೋರಪಾಙ್ಮೂತ್ರಕಮ್ |
ಆಲ್ಪೇ ಶಕ್ತಿಭುವೋ ಯಥಾರುಚಿ ಪರೇ ಗೇಹಸ್ಯ ದಕ್ಷೇ ಘಟ-
ದ್ದಾಂಬೂಲೂಖಲಚುಲ್ಲಿಕಾಪಿತೃಪದಪ್ರಕ್ಷಾಲನಾನ್ಯೂಚಿರೇ ||

(ಈ ಬಗ್ಗೆ ಚಿತ್ರವನ್ನು ಪರಿಶಿಷ್ಟ ೧, ಚಿತ್ರ ೧೧ರಲ್ಲಿ ನೋಡಿರಿ)



# अकारादिक्रमेण तन्त्रसारसङ्ग्रहश्लोकानुक्रमणिका

* * * * *

## ಪರಿಶಿ
## ತಂತ್ರಸಾರಸಂಗ್ರಹದಲ್ಲಿ ಶ್ರೀಮಧ್ವರು ನಿರೂ


ಕೇಶವ


ನಾರಾಯಣ


ಮಾಧವ


ಗೋವಿಂದ


ವಿಷ್ಣು


ಮಧುಸೂದನ

**ಚಿತ್ರ - 1**

**ದಂತೆ ಕೇಶವಾದಿಚತುರ್ವಿಂಶತಿಮೂರ್ತಿಗಳು**



ತ್ರಿವಿಕ್ರಮ



ವಾಮನ



ಶ್ರೀಧರ



ಹೃಷೀಕೇಶ



ಪದ್ಮನಾಭ



ದಾಮೋದರ

## ತಂತ್ರಸಾರಸಂಗ್ರಹದಲ್ಲಿ ಶ್ರೀಮಧ್ವರು ನಿರೂ


ಸಂಕರ್ಷಣ


ವಾಸುದೇವ


ಪ್ರದ್ಯುಮ್ನ


ಅನಿರುದ್ಧ


ಪುರುಷೋತ್ತಮ


ಅಧೋಕ್ಷಜ

ಚಿತ್ರ – 1

ದಂತೆ ಕೇಶವಾದಿಚತುರ್ವಿಂಶತಿಮೂರ್ತಿಗಳು



ನಾರಸಿಂಹ



ಅಚ್ಯುತ



ಜನಾರ್ದನ



ಉಪೇಂದ್ರ



ಹರಿ



ಕೃಷ್ಣ

8. ತನ್ಮಧ್ಯೇ ರಮಾರೂಪದಿವ್ಯಮಂಟಪಾಯ ನಮಃ

7. ರಮಾರೂಪಶ್ವೇತದ್ವೀಪಾಯ ನಮಃ

6. ತದುಪರಿ ಕ್ಷೀರಸಾಗರಾಭಿಮಾನಿ ವರುಣಾಯ ನಮಃ

5. ವಾಯುಪುಚ್ಛಾಶ್ರಿತಾನಂತನಾಮಕ- ಶೇಷಾಯ ನಮಃ

4. ತತ್ಪುಚ್ಛಾಶ್ರಿತವಾಯುಕೂರ್ಮಾಯ ನಮಃ

3. ಅಂಡಾಂತರ್ಜಲಾಧಾರವಿಷ್ಣು ಕೂರ್ಮಾಯ ನಮಃ

2. ಬ್ರಹ್ಮಾಂಡಾಧಾರಭೂತ ವಿಷ್ಣುಕೂರ್ಮಾಯ ನಮಃ

1. ಆಧಾರರೂಪಿಣ್ಯೈ ಶಕ್ತಿನಾಮ್ನ್ಯೈ ರಮಾಯೈ ಪರಮಪುರುಷಾಯ ನಮಃ

## ಪರಿಶಿಷ್ಟ ಚಿತ್ರ – 3

ನೈರುತ್ಯ

ಪಶ್ಚಿಮ

IV ಅವೈರಾಗ್ಯ-ಕಾಮ

VI ಅಂತರಾತ್ಮ

ದಕ್ಷಿಣ

V ಅಜ್ಞಾನ-ದುರ್ಗಾ

ಕ್ಷಿಣೇ ಸರ್ವದೇವತಾಃ

III ನೈ.ಜ್ಞಾನ-ವಾಯು

ಆ.ಧರ್ಮ-ಯಮ

II ನೈ.ವ್ಯಾಸ

II ಆ. ಗರುಡ




VI ಅಧರ್ಮ - ನಿರ್ಋತಿ

ಆಗ್ನೇಯ

ಪೂರ್ವ

ಪೂಜಾಕಾಲದಲ್ಲಿ ವಿಶ್ವವನ್ನು ಹೊತ್ತ ಭಗವಂತನ ಆ

ವಾಯವ್ಯ




ಉತ್ತರ

IV ಅನ್ಯೈಶ್ವರ್ಯ-ರುದ್ರ

I ವಾಮೇ ವಾಯುಂ ಸರ್ವಗುರೂನ್

8. ತನ್ಮಧ್ಯೇ ರಮಾರೂಪದಿವ್ಯಮಂಟಪಾಯ ನಮಃ
7. ರಮಾರೂಪಶ್ವೇತದ್ವೀಪಾಯ ನಮಃ
6. ತದುಪರಿ ಕ್ಷೀರಸಾಗರಾಭಿಮಾನಿ ವರುಣಾಯ ನಮಃ
5. ವಾಯುಪುಚ್ಛಾಶ್ರಿತಾನಂತನಾಮಕ-ಶೇಷಾಯ ನಮಃ
4. ತತ್ಪುಚ್ಛಾಶ್ರಿತವಾಯುಕೂರ್ಮಾಯ ನಮಃ
3. ಅಂಡಾಂತರ್ಜಲಾಧಾರವಿಷ್ಣು ಕೂರ್ಮಾಯ ನಮಃ
2. ಬ್ರಹ್ಮಾಂಡಾಧಾರಭೂತ ವಿಷ್ಣುಕೂರ್ಮಾಯ ನಮಃ
1. ಆಧಾರರೂಪಿಣ್ಯೈ ಶಕ್ತಿನಾಮ್ನ್ಯೈ ರಮಾಯೈ

ಈಶಾನ್ಯ



...ಸನೆಗಾಗಿ ಅನುಸಂಧಾನ ಮಾಡಬೇಕಾದ ಅಂಶಗಳು




ಶ್ರೀಭೂರಮಣನಾದ ಶ್ರೀಹರಿಯನ್ನು ಏಳು ಆವರಣಗಳಿಂದ ಸಹಿ
ತಂತ್ರಸಾರಸಂಗ್ರಹ ಹಾಗೂ ಪದ್ಯಮಾಲಾನುಸಾರ

ಚಿತ್ರ – 4




ವಾದ ಅವನ ರೂಪಗಳನ್ನು ಮತ್ತು ಭಕ್ತಗಣದೊಡನೆ ಪೂಜಿಸಬೇಕು.

ದಾಗಿ ಸಪ್ತಾವರಣಪೂಜೆಯ ಚಿತ್ರವನ್ನು ನೀಡಲಾಗಿದೆ.

## ಪರಿಶಿಷ್ಟ ಚಿತ್ರ - 5




ಯಜ್ಞಕುಂಡದ ರಚ




ನೆ – ವಿನ್ಯಾಸ




ಪ್ರತಿಮೆಯ ಹೆಬ್ಬೆರಳಿನ ನಡುರೇಖೆಯಿಂದ ಬೆರಳಿನ ತುದಿಯ ಭಾಗವು ಒಂದು ಅಂಗುಲವೆನಿಸಿದೆ. ಇಂತಹ 96 ಅಂಗುಲದ ಪ್ರತಿಮೆ ಇರಬೇಕು. ಪ್ರತಿಮೆ ಚಿಕ್ಕವಾದಂತೆ ಅಂಗುಲವಿನ್ಯಾಸವೂ ಚಿಕ್ಕದಾಗುವುದು. 12 ಅಂಗುಲದ ಪ್ರತಿಮೆ ಪ್ರಾದೇಶ(ಹ್ರಸ್ವ)ಪ್ರತಿಮೆ. 24 ಅಂಗುಲದ ಪ್ರತಿಮೆ ಹಸಪ್ರತಿಮೆ. 120 ಅಂಗುಲದ ಪ್ರತಿಮೆ ಪುರುಷಪ್ರಮಾಣಪ್ರತಿಮೆ ಎನಿಸಿದೆ.







ತೊಡೆಯ ಮೇಲ್ಭಾಗ 28 ಅಂ.

ತೊಡೆಯ ನಡು 24 ಅಂ.

ತೊಡೆಯ ತುದಿ

ಮೊಣ ಕಾಲ ಗಂಟಿನ ಅಳತೆ 18 ಅಂ.

ಮೊಣ ಗಂಟಿನ ಬಳಿಯ ಸುತ್ತಳತೆ 17 ಅಂ.

ಮಧ್ಯ ಭಾಗ 13 ಅಂ.

ಮೊಣ ಕಾಲಿನ ಸುತ್ತಳತೆ 10 ಅಂಗುಲ

ಟೊಂಕದ ಸುತ್ತಳತೆ 38 ಅಂ

} ಹೊಕ್ಕಳ ಹರವು 1 1/2 ಅಂ ಅದರ ಒಳ ಕುಳಿ ½ ಅಂ.

ನಾಭಿಯ ಕೆಳಗಿನ ಹೊಟ್ಟೆಯ ಸುತ್ತಳತೆ 39 ಅಂ

ಲಿಂಗದ ಸುತ್ತಳತೆ 7 ಅಂ.

ಲಿಂಗದ ದೈರ್ಘ್ಯ 4½ ಅಂ.

ಅಂಡಕೋಶದ ಉದ್ದ 4 ಅಂಗುಲ

ಅಂಡಕೋಶದ ಸುತ್ತಳತೆ 7 ಅಂ.









1. ಅಂಗೈಯ ಅಗಲ ಉದ್ದ – 4¾
2. ತರ್ಜನಿ ಅನಾಮಿಕೆಯ ಉದ್ದ – 4¼
3. ನಡು ಬೆರಳು ಹೆಬ್ಬೆಟ್ಟಿನ ಸುತ್ತಳತೆ – 3½
4. ತರ್ಜನಿ ಅನಾಮಿಕೆಯ ಸುತ್ತಳತೆ – 2½


ಣೆಯ ಅಳತೆ
- 3 ಅಂ
ಮೂಗಿನ ಅಳತೆ
- 3 ಅಂ.
ಮೂಗಿನ ತುದಿಯಿಂದ
ಗಲ್ಲದವರೆಗೆ 3 ಅಂ.
ತ್ತಿನ ಸುತ್ತಳತೆ - 19 ಅಂ
7. ಮೂಗಿನಿಂದ ಕಿವಿಯವರೆಗಿನ
ಬದಿಗಳ ಉದ್ದ - 7 ಅಂ.
6. ಬಾಯಿಯಿಂದ
ಕಿವಿಯವರೆಗೆ ಉದ್ದ - 6 ಅಂ.
5. ಬಾಯಿಯ ಅಗಲ - 4 ಅಂ.


3. ಮೇಲು ತುಟಿಯಿಂದ
ಮೂಗಿನ ವರೆಗಿನ ಎತ್ತರ - 1/2 ಅಂ.
1. ಮೇಲ್ತುಟಿಯ ಎತ್ತರ - 3/4 ಅಂ.
2. ಕೆಳತುಟಿಯ ಎತ್ತರ - 1/2 ಅಂ
4. ಕೆಳ ತುಟಿಯಿಂದ
ಗಲ್ಲದ ವರೆಗೆ - 1 1/2 ಅಂ


1. ಮೂಗಿನ ಬದಿಯಿಂದ
ತುದಿಯ ವರೆಗಿನ ಎತ್ತರ - 1 1/4 ಅಂ.
2. ಮೂಗಿನ ಹೊರಟೆಗಳ ಎತ್ತರ - 1/2 ಅಂ.
3. ಹೊರಳೆಗಳ ನಡುಗಂಬದ ಎತ್ತರ - 1/2 ಅಂ.
4. ಮೂಗಿನ ತುದಿಯ ವಿಸ್ತಾರ - 1/3 ಅಂ.



5. ಹುಬ್ಬುಗಳ ಅಗಲ - 1/2 ಅಂ.

4. ಹುಬ್ಬುಗಳ ಉದ್ದ - 4 ಅಂ

1. ಕಣ್ಣುಗಳ ಉದ್ದ - 3 ಅಂ.

2. ಅರಳಿದ ಕಣ್ಣಿನ ಅಗಲ - 1 ಅಂ.

3. ಸಾಮಾನ್ಯ ಕಣ್ಣಿನ ಅಗಲ - 1/2 ಅಂ

6. ಕಣ್ಣು ದೃಷ್ಟಿ ನೆಟ್ಟಗಿರಬೇಕು.



1. ಕಿವಿಯ ಉದ್ದ 3 ಅಂಗುಲ

2. ಕಿವಿಗಳ ಅಗಲ 2 ಅಂಗುಲ

3. ಕರ್ಣರಂಧ್ರದ ಉದ್ದ 2 ಅಂಗುಲ

4. ಒಳಭಾಗದ ಅಗಲ 2 ಅಂಗುಲ

1. 96 ಅಂಗುಲದ ಪ್ರತಿಮೆ

2. ಪ್ರತಿಮೆಯ 1½ಯಷ್ಟು ಎತ್ತರದ ಬಾಗಿಲು

3. 48 ಅಂಗುಲದ ಪೀಠದ ಕಲ್ಲು

4. ಪ್ರತಿಮೆಯ ಅಂಗುಲದ ಅಳತೆಯಿಂದ 4 ಅಂಗುಲದಷ್ಟು ಪೀಠದ ಅಡಿಗಲ್ಲು

5. ಪ್ರತಿಮೆಯ ಮೇಲ್ಭಾಗದಲ್ಲಿ 96 ಅಂಗುಲದಷ್ಟು ಮೇಲೆ ಅವಕಾಶ

6. ವರ್ತುಲಾಕಾರಗೋಪುರ

7. ಪ್ರತಿಮೆಯಷ್ಟೇ ಗರ್ಭಗುಡಿಯ ಮೇಲ್ಭಾಗದಲ್ಲಿ ಅವಕಾಶವಿರಬೇಕು ಕ್ರಮೇಣ ಮೇಲ್ಭಾಗ ವರ್ತುಲಾಕಾರವಾಗಿದ್ದು ಕೊನೆಯ ಶಿಖರವು ದುಂಡಾಗಿ ಕಿರೀಟದಂತಿರಬೇಕು.

2

# ಚಿತ್ರ - 9

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ಧ | ಗುರು | ಗಭೀರ | ಗಾಹನ | ಗಹನ | ಗುಹ | ಭಾನು | ಅಂಗಾರಕ |
| ಸ್ಪತಿ | ಕುಬೇರ | ಹರಿ | ಕಾಮ | ಕಾಮ | ಕಾಮ | ಸೂರ್ಯ | ವಿದರಿ |
| ರ | ಸ್ಕಂದ | ಈಶಾನ | ಇಂದ್ರ | ಇಂದ್ರ | ಅಗ್ನಿ | ಧಾರುಣ | ದ್ಯೋತ |
| ರಣ | ಸ್ಕಂದ | ಸೋಮ | ಬ್ರಹ್ಮಾ | ಬ್ರಹ್ಮಾ | ಯಮ | ಧಾತಾ | ಪ್ರದ್ಯೋತ |
| ಚಾರ | ಸ್ಕಂದ | ಸೋಮ | ಬ್ರಹ್ಮಾ | ಬ್ರಹ್ಮಾ | ಯಮ | ಧಾತಾ | ದ್ಯೋತನ |
| ಚರ | ಚಾರ | ವಾಯು | ವರುಣ | ವರುಣ | ನಿರ್ಋತಿ | ಧಾತಾ | ದರಿ |
| ಕಾರ | ಕಾಲ | ವಿಧಾತಾ | ವಿಧಾತಾ | ವಿಧಾತಾ | ಪುಷ್ಕರ | ವಿನಾಯಕ | ಮೃತ್ಯು |
| ರ್ಗವ | ಚಾರ್ವಾಂಗ | ಕ್ಷರ | ಕ್ಷೋಭಣ | ವಿಕ್ಷಣ | ಕ್ಷಾರ | ಕ್ಷರಣ | ಶನೈಶ್ಚರ |

ವಾಸ್ತುಮಂಡಲದಲ್ಲಿ ಆವಾಹಿಸಿ ಪೂಜಿಸಬೇಕಾದ ದೇವತೆಗಳ ಸಮುದಾಯ

# ಚಿತ್ರ - 10


ತಂತ್ರಸಾರಸಂಗ್ರಹದಂತೆ ಶಕ್ತಿಕೇಂದ್ರಗಳು
ಮೂರ್ಧಾ
ಸಹಸ್ರಾರ
ಆಜ್ಞಾಚಕ್ರ
ಭ್ರೂಮಧ್ಯ (Brow)
ಇಂದ್ರಯೋನಿ (Throat)
ವಿಶುದ್ಧಚಕ್ರ
ಹೃದಯ (Heart)
ಅನಾಹತ
ನಾಭಿ(ಹೊಕ್ಕಳು)
(solar plexus)
ಮಣಿಪೂರ
ಮೂಲಾಧಾರ (Sacral)
ಸ್ವಾಧಿಷ್ಠಾನಚಕ್ರ

# ಚಿತ್ರ - 11



Door
E
Pooja
Visitors Hall
Bathroom
Store room
Kitchen
D
Welth store Room
Hall
Store room
Bedroom
Bedroom
Toilet
Room
Dining Hall
Study room
Room
Road
Door
Pooja
Visitors Hall
Bath room
Store room
Kitchen
D
Wealth store room
N
Hall
Store room
Bed room
Bed room
Toilet
Room
Dining Hall
Study room
Room
Road
Pooja
Visitors Hall
Bath room
Store room
Kichen
D
Wealth store room
Hall
Store room
S
Bed room
Bed room
Toilet
Room
Dining Hall
Study room
Room
Road
Main Door
Pooja
Visitors Hall
Bathroom
Store room
Kitchen
D
Welth store Room
Hall
Store room
Bedroom
Bedroom
Toilet
Room
Dining Hall
Study room
Room
W

## ಪ್ರಸಾರಾಂಗದ ಹೊಸ ಪುಸ್ತಕಗಳ ಪಟ್ಟಿ

| | | |
|---|---|---|
| 1 | ಪಂಪಭಾರತ – ಭಾಗ 2 (9–14 ಆಶ್ವಾಸಗಳು) | ರೂ. 60–00 |
| 2 | ಭಾರತೀಯ ಕಾವ್ಯಮೀಮಾಂಸೆ – ತೀ.ನಂ.ಶ್ರೀ | ರೂ.100–00 |
| 3 | ಸ್ನಾತಕ ಕಾವ್ಯ ಸಂಗ್ರಹ (ಹಿಂದೀ ಪುಸ್ತಕ) | ರೂ. 30–00 |
| 4 | ಮಕ್ಕಳ ಸಂವೇಗಗಳು ಮತ್ತು ಸಂವೇಗಾತ್ಮಕ ಸಮಸ್ಯೆಗಳು – ಪ್ರಾ. ಬಿ. ನಟರಾಜ್ | ರೂ. 50–00 |
| 5 | ಕನ್ನಡ ಗ್ರಂಥಸೂಚಿ ಸಂಪುಟ 9 | ರೂ.350–00 |
| 6 | ಮರಾಠರ ಅತಿಕ್ರಮಣ – ಮೈಸೂರು ಪ್ರತಿಭಟನೆ – ಡಾ. ಬಿ. ಮುದ್ದಾಚಾರಿ | ರೂ.120–00 |
| 7 | ಭಾರತದ ಪ್ರೌಢ ಇತಿಹಾಸ – ಮೂಲ: ಮಜುಂದಾರ್, ಅನು. ಶಾರದಾಪ್ರಸಾದ್ | ರೂ.500–00 |
| 8 | ಕಾವೇರಿ ಮಾಹಾತ್ಮ್ಯ – ಸಂ. ಎಂ.ಪಿ.ಮಂಜಪ್ಪಶೆಟ್ಟಿ | ರೂ.400–00 |
| 9 | ಶ್ರೀ ಸಿದ್ದೇಶ್ವರ ಪುರಾಣ – ಸಂ. ಮೈಲಹಳ್ಳಿ ರೇವಣ್ಣ | ರೂ.200–00 |
| 10 | ಧರ್ಮಶಾಸ್ತ್ರದ ಇತಿಹಾಸ – ಸಂ 1, ಭಾಗ 2 ಮೂಲ: ಪಾಂಡುರಂಗ ವಾಮನ ಕಾಣೆ | ರೂ.350–00 |
| 11 | ಶ್ರೀ ವ್ಯಾಸರಾಯರ ಕೃತಿಗಳು (ಜನಪ್ರಿಯ) – ಸಂ. ಟಿ.ಎಸ್. ನಾಗರತ್ನ | ರೂ. 60–00 |
| 12 | ಶ್ರೀ ವ್ಯಾಸರಾಯರ ಕೃತಿಗಳು (ಪಂಡಿತ) – ಸಂ. ಟಿ.ಎಸ್. ನಾಗರತ್ನ | ರೂ.150–00 |
| 13 | ಎಪಿಗ್ರಾಫಿಯಾ ಕರ್ನಾಟಿಕ ಸಂಪುಟ 12 (ಚಿಕ್ಕಮಗಳೂರು ಜಿಲ್ಲೆ) | ರೂ.750–00 |
| 14 | ಇಂಗ್ಲಿಷ್–ಕನ್ನಡ ನಿಘಂಟು (S-Z) | ರೂ.200–00 |



ಬೆಲೆ ರೂ.: 350/– US $ 10